# समासः

– जि. महाबलेश्वरभट्टः

संस्कृतभारती
बेङ्गलूरु

संस्कृतभारती
'अक्षरम्', ८ उपमार्गः, २ घट्टः
गिरिनगरम्, बेङ्गलूरु - ५६० ०८५



प्रथममुद्रणम् - १९९४ - ५,०००
द्वितीयमुद्रणम् - १९९७ - ५,०००
तृतीयमुद्रणम् - १९९९ - ५,०००

मूल्यं - रू. २०.००

मुखपुटकला - के. जि. लिङ्गदेवरु

मुद्रणम् -
स्प्यान् प्रिण्ट्
बसवनगुडि, बेङ्गलूरु - ४

SAMASAHA - A study book for Samasa, prepared
by Vidwan G. Mahabaleshwara Bhat.
Publisher - **SAMSKRITA BHARATI** - 'Aksharam', 8th Cross, II Phase,
Girinagar, Bangalore - 560 085. Ph : 6721052 / 6722576 Fax : 6722576.
E-mail : samskrit.sscentre.@gems.vsnl.net.in

Pages - vi + 82 - Price - Rs. 20-00 Third Print - October- 1999
Printed at - **Span Print,** Basavanagudi, Bangalore - 560 004

# प्रास्ताविकं किञ्चित्

## (प्रथममुद्रणस्य)

*छात्राणाम् अध्यापकानां च उपकारकं भवेत् इति धिया लिखितम् इदं समासपुस्तकम् । छात्राः तावत् प्रायः समासभेदान् तेषाम् उदाहरणानि च ज्ञातुम् इच्छन्ति । अध्यापकाः समासस्य लक्षणं, विग्रहस्य स्वरूपं, पूर्वोत्तरयोः पदयोः जायमानान् विकारान् च संक्षेपेण अवगन्तुम् अभिलषन्ति । विषयस्य दाढर्यसम्पादनाय विभिन्नान् अभ्यासान् छात्राः विशेषेण वाञ्छन्ति । अतः एतादृशानाम् अपेक्षायाः अनुगुणम् इदं पुस्तकम् आरचितम् ।*

*समासो नाम कः ? को नाम विग्रहः ? समासभेदाः कति ? कानि च तेषाम् उदाहरणानि ? इत्येते अंशाः प्रथमे द्वितीये च प्रकरणे संक्षेपेण लिखिताः । टिप्पण्यः अपि क्वचित् आरचिताः । छात्राः एतत् प्रकरणद्वयं सावधानं पठित्वा समासस्य उदाहरणानि पुनः पुनः परिशील्य यदि स्मृतिपथे स्थापयन्ति तर्हि समासस्य विषये प्रायः क्लेशं न अनुभवेयुः ।*

*तृतीये प्रकरणे पूर्वोत्तरपदयोः विशेषाः निरूपिताः । लिङ्गानुसरणार्थम् अन्त-व्यवस्थानिर्णयार्थं च मार्गदर्शनमपि अत्र संक्षेपेण कृतमस्ति । अनन्तरप्रकरणे समासभेदानां विस्तरेण निरूपणं कृतम् ।*

*अस्मिन् पुस्तके विषयः पुनरुक्तः इव प्रतीयते । आदौ संक्षेपेण निरूपणं, पश्चात् विस्तरेण कथनम् इति क्रमः यदा आश्रीयते तदा पुनरुक्तता अनिवार्या भवति । केचन अंशाः तु पुनः पुनः उक्ताः, ये अंशाः अवश्यं स्मरणीयाः भवेयुः ।*

*द्वितीयप्रकरणे समासभेदनिरूपणावसरे प्रसिद्धानि सूत्राणि लिखितानि । किन्तु तेषाम् अर्थः न उक्तः । चतुर्थे प्रकरणे विस्तरेण निरूपणसमये तु सूत्रतात्पर्यं लिखितम् । अधस्तात् सूत्राणि उल्लिखितानि । आवश्यकतायां सत्यां टिप्पणी तु विशेषतः लिखिता सर्वत्र । एतावता अपि समाससम्बन्धी सर्वोऽपि विषयः अत्र निरूपितः इति न । प्रायः प्रतिशतं सप्तत्यंशाः निरूपिताः स्युः ।*

*पुस्तके अस्मिन् अभ्यासपाठान् रचितवते श्री जनार्दनहेगडेमहोदयाय विशेषेण धन्यवादाः समर्प्यन्ते । कलाकारः, अक्षरसंयोजकः, मुद्रणालयाधिकारी, सर्वविधाः सहकारिणः चापि कृतज्ञतापूर्वकं स्मर्यन्ते ।*

*भावसं।। श्रावणपूर्णिमा* — *लेखकः*

*२१.८.१९९४*

## *(तृतीयमुद्रणस्य)*

*पुस्तकस्यास्य उपयोगयोग्यता बहुभिः विद्वद्भिः अध्यापकवर्यैः च बहुधा प्रशंसिता । उपयोगसमये ये परिष्कारांशाः स्फुरिताः, अन्यैः सूचिताः च, तान् संयोज्य एतत् पुस्तकम् इदानीं पुनः प्रकाश्यमानम् अस्ति । सहकृतवन्तः सर्वे धन्यवादार्हाः सन्ति ।*

*प्रमाथि सं ।। भाद्रपदकृष्णदशमी* — *प्रकाशकः*

*४.१०.१९९९*

# उपयोगार्थं सूचना



छात्राणां कृते
सर्वेषां कृते
'कः समासः इति कथं ज्ञातव्यम् ?' इति ज्ञातव्यं चेत्
४-५ पुटौ पश्यन्तु ।
'समासे कति भेदाः सन्ति ?' इति ज्ञातव्यं चेत्
६-१६ पुटं पश्यन्तु ।
'समस्तस्य पदस्य किं लिङ्गम् ?' इति ज्ञातव्यं चेत्
२८ पुटं पश्यन्तु ।
'समस्तस्य पदस्य किम् अन्तं स्यात् ?' इति ज्ञातव्यं चेत्
३०-३३ पुटान् पश्यन्तु ।
समासभेदाः विस्तरेण ज्ञातव्याः चेत्
३४-५८ पुटान् पश्यन्तु ।
'सुबन्तयोः योजनसमये का प्रक्रिया ?' इति ज्ञातव्यं चेत्
६४-६७ पुटान् पश्यन्तु ।
पूर्वोत्तरपदयोः विशेषनियमाः विस्तरेण ज्ञातव्याः चेत्
१७-२७ पुटान् पश्यन्तु ।
पूर्वपदे उत्तरपदे च स्मरणीयाः अंशाः सङ्ग्रहेण ज्ञातव्याः चेत्
२९-३३ पुटान् पश्यन्तु ।

# अनुक्रमणिका

प्रथमं प्रकरणम्

# १. अथ समासः (उपक्रमः)

## १.१. समासः

१. समसनं समासः । अनेकस्य पदस्य एकपदीभवनं समासः इत्यर्थः ।

**यथा** - *सीतायाः पतिः = सीतापतिः*

२. समासः सुबन्तानां भवति, [1]न तु तिङन्तानाम् ।

३. समासः युगपत् [2]द्वयोः द्वयोः सुबन्तयोः भवति । द्वन्द्वे तु युगपत् बहूनामपि ।

**यथा** - १. राजपुरुषागमनम् ।
राज्ञः पुरुषः = राजपुरुषः ।
राजपुरुषस्य आगमनम् = राजपुरुषागमनम् ।

२. हरिहरगुरवः ।
*हरिश्च हरश्च गुरुश्च = हरिहरगुरवः ।*

४. परस्परान्वितयोः सुबन्तयोः समासः भवति ।

यथा - राज्ञः पुत्रः = राजपुत्रः । अत्र द्वयोः परस्परान्वयः अस्ति ।

यत्र परस्परान्वयो नास्ति तत्र न समासः ।

यथा - 'भवति दर्शनं राज्ञः, पुत्रः चोरस्य धावति ।' अत्र राज्ञः दर्शने अन्वयः । पुत्रस्य चोरे अन्वयः । अतः अत्र राजशब्दस्य पुत्रशब्दस्य च परस्परान्वयाभावात् न समासः ।

---

१. क्वचित् तिङन्तयोः सुबन्त-तिङन्तयोश्च समासः श्रूयते । यथा - खादतमोदता, एहियवम् । किन्तु एतानि परिगणितानीति सर्वत्र कर्तुं न शक्यते ।

२. क्वचित् बहुव्रीहौ तत्पुरुषे च बहूनामपि सुवन्तानां युगपत् समासो भवति । यथा - रूपवती विदुषी पुत्री यस्य सः रूपवतीविद्वत्पुत्रीकः । द्वे अहनी जातस्य द्व्यह्नजातः।

५. समासे पूर्वत्र श्रूयमाणं पदं पूर्वपदमिति, उत्तरत्र श्रूयमाणं पदम् उत्तरपदमिति च व्यवह्रियते ।

**यथा** - चोरात् भयम् = चोरभयम् ।
*अत्र 'चोर' इति पूर्वपदम् । 'भयम्' इति उत्तरपदम् ।*

६. समासे जाते पूर्वपदम् उत्तरपदं च प्रातिपदिकरूपेण स्थितं भवति । ततः समस्तात् पदात् विभक्तिः योजनीया ।

**यथा** - शास्त्रे निपुणः = शास्त्र + ङि + निपुण + स् = शास्त्रनिपुण = शास्त्रनिपुणः

## १.२. विग्रहः

वृत्त्यर्थावबोधकं वाक्यं विग्रहः । वृत्तिः = समासादिः । समासादेरर्थं बोधयितुं यद्वाक्यमुच्यते तद्वाक्यं 'विग्रहः' इति व्यवह्रियते ।

**यथा** - 'वृक्षमूलम्' इति समासः । 'वृक्षस्य मूलम्' इति विग्रहः ।

- विग्रहः द्विधा - १. स्वपदविग्रहः
२. अस्वपदविग्रहः* - इति ।

### १. स्वपदविग्रहः -

समासस्यार्थः समासघटकैः पदैर्यदि वर्ण्यते तदा स्वपदविग्रहः । तथा च - 'समासघटकपदसहितं वाक्यं स्वपदविग्रहः' इत्यर्थः । (स्व(=समास)पदैः विग्रहः)

**यथा** - *ग्रामगतः इति समासः ।*
*ग्रामं गतः इति स्वपदविग्रहः ।*

---

* अलौकिकविग्रहोऽप्यस्ति । एषः प्रक्रियादशायाम् आश्रीयते ।
यथा - रमापतिः । अस्य समासस्य अलौकिकविग्रहः - रमा + ङस् + पति + स् इति ।

**२. अस्वपदविग्रहः -**

समासस्यार्थः समासघटकपदानि विहाय पदान्तरैर्यदि वर्ण्यते तदा अस्वपदविग्रहः । तथा च - 'समासघटकपदरहितं वाक्यम् अस्वपदविग्रहः' इत्यर्थः । (अत्र एकं पदं समासघटकमेव प्रायो भवति ।) नित्यसमासे अस्वपदविग्रहः क्रियते ।

यथा - उपकृष्णम् इति समासः ।
कृष्णस्य समीपम् इति अस्वपदविग्रहः ।
अत्र समीपमिति पदं न समासघटकं पदम् ।

## १.३. समासभेदाः

- समासः द्विधा - १. केवलसमासः
२. विशेषसमासः - इति ।

**१. केवलसमासः* -**

तत्पुरुषादिसंज्ञाविनिर्मुक्तः समाससंज्ञामात्रयुक्तः केवलसमासः ।
यथा - पूर्वं भूतः = भूतपूर्वः

**२. विशेषसमासः** चतुर्धा - १. तत्पुरुषः २. बहुव्रीहिः
३. द्वन्द्वः ४. अव्ययीभावः चेति ।

१. **तत्पुरुषः** चतुर्धा - १. सामान्यः (७)
२. कर्मधारयः (९)
३. द्विगुः (३)
४. नञ्प्रभृतयः (५)

२. **बहुव्रीहिः** द्विधा - १. सामान्यः (६)
२. विशेषः (९)

---

* अस्य समासस्य विस्तरो नास्ति । अगतिकगतौ अयं केवलसमासः आश्रीयते । अयमेव 'सुप्सुपा समासः' इति व्याख्यानादिषु लिख्यते । 'सह सुपा' (२.१.४) इति सूत्रेण विहितः समासः इति तस्य तात्पर्यम् ।

३. **द्वन्द्वः** द्विधा - १. इतरेतरः (२)
२. समाहारः (२)

४. **अव्ययीभावः** प्रायः त्रयस्त्रिंशद्धा (३३)
प्रसिद्धाः (१२)

## १.४. समासार्थः

समासे पूर्वपदम् उत्तरपदञ्च भवतः इत्युक्तम् । तत्र पूर्वपदस्य अपि अर्थः अस्ति । उत्तरपदस्य अपि अर्थः अस्ति । कदाचित् पूर्वपदार्थस्य, कदाचित् उत्तरपदार्थस्य, कदाचित् अन्यपदार्थस्य, कदाचित् उभयपदार्थस्य च प्राधान्यं भवति । *यस्य पदस्यार्थः प्रायः क्रियया अन्वितो भवति सोऽर्थः प्रधानमित्युच्यते ।

यथा - राजदूतो गच्छति । राज्ञः दूतः इति विग्रहः । 'राजन्' इति पूर्वपदम् । 'दूत' इति उत्तरपदम् । 'गच्छति' इति क्रियापदम् । गमनक्रियया 'दूत' इति उत्तरपदस्य अर्थः एव अन्वितः भवंति, न तु पूर्वपदस्य राजपदस्य अर्थः । अतः 'राजसम्बन्धी दूतः गच्छति' इत्यर्थः सिद्धो भवति । एवञ्च अत्र दूतपदार्थः क्रियया अन्वितः इति दूतपदार्थः प्रधानम् ।

**समस्ते पदे श्रुते को नाम अर्थोऽत्र प्रधानं स्यादिति सन्देहे, यत्किञ्चित्क्रियापदम् उच्चारणीयम् । ततः पूर्वोत्तरपदार्थयोः कतरः पदार्थः क्रियया अन्वितो भवतीति परिशील्य प्रधानाप्रधानयोर्निर्णयः कर्तव्यः ।**

---

* 'राजदूतस्य पुत्रः गच्छति' इत्यादौ उत्तरपदार्थस्य दूतस्य पुत्रे एव अन्वयः, न तु गमनक्रियायाम् । अतः क्रियया अन्वितो भवति इति पङ्क्तिः कथं सङ्गच्छताम् ? सत्यम् । किन्तु यदा वाक्यात् पृथक्कृत्य समस्तपदं केवलं परिशीलयामः, तदा एवायमुपाय आश्रयणीय इत्यत्र तात्पर्यमिति मन्तव्यम् ।

१. **प्रायः * उत्तरपदार्थप्रधानः तत्पुरुषः ।**

उत्तरपदस्य अर्थः यदि क्रियया अन्वितो भवति तर्हि तत्पुरुषः इत्यर्थः ।
यथा - कर्मकुशलः ।
'कर्मकुशलम् आह्वयतु' इत्यत्र उत्तरपदस्य कुशलपदस्य अर्थः आह्वानक्रियया अन्वितो भवति, न तु पूर्वपदस्य अर्थः ।

२. **प्रायः अन्यपदार्थप्रधानः बहुव्रीहिः ।**

अन्यपदं = समासाघटकं पदम् । समासाघटकस्य पदस्य अर्थः यदि क्रियया अन्वितो भवति तर्हि बहुव्रीहिः इत्यर्थः ।

यथा - पीतं क्षीरं येन सः = पीतक्षीरः (बालः) ।

'पीतक्षीरः (बालः) गच्छति' इत्यत्र पीतपदस्य क्षीरपदस्य वा अर्थः गमनक्रियया अन्वितो न भवति । किन्तु समासाघटकस्य बालपदस्य (अन्यपदस्य) अर्थः अन्वितो भवति ।

३. **प्रायः उभयपदार्थप्रधानः द्वन्द्वः ।**

उभयोः पदार्थयोः यदि क्रियया अन्वयो भवति तर्हि द्वन्द्वः इत्यर्थः । उभयपदार्थप्रधानः इत्यस्य सर्वपदार्थप्रधान इत्यत्र तात्पर्यम् । तेन बहुपदद्वन्द्वेऽपि लक्षणसमन्वयो भवति ।

यथा - रामकृष्णौ

'रामकृष्णौ प्रविशतः' इत्यत्र प्रवेशनक्रियायाम् उभयोरपि पदार्थयोः अन्वयः भवति ।

४. **प्रायः पूर्वपदार्थप्रधानः अव्ययीभावः ।**

पूर्वपदस्य अर्थस्य प्राधान्ये अव्ययीभावः इत्यर्थः ।
यथा - उपवृक्षम् ।
वृक्षस्य समीपमिति विग्रहः । अत्र 'उप' इति पूर्वपदस्य सामीप्यार्थस्य प्राधान्यम् ।

---

* क्वचित् एतत् लक्षणं समन्वितं न भवति । एवमन्यानि त्रीणि अपि लक्षणानि । अतः सर्वत्र प्रायः इत्युक्तम् ।

द्वितीयं प्रकरणम्

# २. सोदाहरणं समासभेदाः*

## २.१. तत्पुरुषः

(प्रायः उत्तरपदार्थप्रधानः तत्पुरुषः)

२.१. तत्पुरुषः चतुर्धा - १. सामान्यः
२. कर्मधारयः
३. द्विगुः
४. नञ्प्रभृतयः इति ।

### २.१.१. सामान्यः सप्तधा -

| *नाम*[३] | *विग्रहः* | *समासः* |
|---|---|---|
| १. प्रथमातत्पुरुषः | अर्धं ग्रामस्य | अर्धग्रामः |
| २. द्वितीयातत्पुरुषः | गृहं गतः | गृहगतः |
| ३. तृतीयातत्पुरुषः | नखैः भिन्नः | नखभिन्नः |
| ४. चतुर्थीतत्पुरुषः | गवे हितम् | गोहितम् |
| ५. पञ्चमीतत्पुरुषः | चोरात् भयम् | चोरभयम् |
| ६. षष्ठीतत्पुरुषः | वृक्षस्य मूलम् | वृक्षमूलम् |
| ७. सप्तमीतत्पुरुषः | कार्ये कुशलः | कार्यकुशलः |

---

* समासभेदानां विस्तरः चतुर्थप्रकरणे (पृ ३४) द्रष्टव्यः ।

३. समासे श्रूयमाणं पूर्वपदं विग्रहावस्थायां यद्विभक्त्यन्तं भवति तद्विभक्तिनाम्ना व्यवहारः । यथा - ग्रामं गतः – ग्रामगतः । अयं द्वितीयातत्पुरुषः ।

## २.१.२. कर्मधारयः [4]नवधा -

[तत्पुरुषः समानाधिकरणः कर्मधारयः - १.२.४२]

| नाम[5] | विग्रहः | समासः |
|---|---|---|
| १. विशेषणपूर्वपदः | [6]नीलो मेघः | नीलमेघः |
| २. विशेषणोत्तरपदः | वैयाकरणः खसूचिः | वैयाकरणखसूचिः |
| ३. विशेषणोभयपदः | शीतम् उष्णम् | शीतोष्णम् |
| ४. उपमानपूर्वपदः* | मेघः इव श्यामः | मेघश्यामः |
| ५. उपमानोत्तरपदः | नरः व्याघ्रः इव | नरव्याघ्रः |
| ६. अवधारणापूर्वपदः | विद्या एव धनम् | विद्याधनम् |
| ७. सम्भावनापूर्वपदः | आम्रः इति वृक्षः | आम्रवृक्षः |
| ८. मध्यमपदलोपः | शाकप्रियः पार्थिवः | शाकपार्थिवः |
| ९. मयूरव्यंसकादिः | अन्यो देशः | देशान्तरम् |

---

४. समानविभक्त्यन्तयोरेव कर्मधारयः । अतः विग्रहवाक्ये पदद्वयमपि समानविभक्त्यन्तं (प्रथमाविभक्त्यन्तम्) भवति ।

५. कर्मधारयेऽपि अन्वर्थानि नामानि । यथा - विशेषणम् उत्तरपदं यस्य सः विशेषणोत्तरपदः कर्मधारयः । 'नीलमेघः' इत्यत्र 'नीलः' इति विशेषणं पूर्वपदञ्च । अतः 'नीलमेघः' इति विशेषणपूर्वपदः कर्मधारयः । एवमेव षट्सु भेदेषु ज्ञेयम् । मध्यमपदलोपः इत्यस्य विग्रहः मध्यमपदस्य लोपः यस्य सः इति । मयूरव्यंसकादिः इति गणस्य नाम । गणे बहवः शब्दाः सन्ति । तेषु प्रथमः शब्दः मयूरव्यंसकः । (व्यंसकः – धूर्तः) । इमानि नामानि पाणिनिना न विहितानि । छात्राणां बोधः सुकरो भवतु इति आधुनिकैः कृतानि ।

६. नीलः मेघः – नीलमेघः । नीलौ मेघौ – नीलमेघौ । नीलाः मेघाः – नीलमेघाः । इति त्रिषु वचनेष्वपि समासो भवति । एवं सर्वेषु समासेषु अर्थं दृष्ट्वा विग्रहः समासश्च वक्तव्यः इति ज्ञेयम् ।

* उपमानानि सामान्यवचनैरेव समस्यन्ते । उपमानोपमेययोः साधारणः धर्मः सामान्यम् । तद्विशिष्टोपमेयवचनैः समासः इत्यर्थः । 'मेघश्यामः' इत्यत्र श्यामशब्दः सामान्यवचनः । तेन 'मेघ इव रामः – मेघरामः' इति न भवति ।

## २.१.३. द्विगुः त्रिधा -

[[७]तद्धितार्थोत्तरपदसमाहारे च - २.१.५१
संख्यापूर्वो द्विगुः - २.१.५२]

| *नाम* | *विग्रहः* | *समासः* |
|---|---|---|
| १. समाहारद्विगुः[८] | त्रयाणां लोकानां समाहारः | त्रिलोकी |
| २. तद्धितार्थद्विगुः | षण्णां मातॄणाम् अपत्यम् | षाण्मातुरः[९] |
| ३. उत्तरपदद्विगुः | पञ्च गावः धनं यस्य सः | पञ्चगवधनः[१०] |

---

७. द्विगुसमासे पूर्वपदं सङ्ख्यावाचकम् एव भवति । किन्तु सङ्ख्यापूर्वः सर्वोऽपि न द्विगुः । यथा - पञ्च गावः यस्य सः पञ्चगुः इति बहुव्रीहिः । द्वौ च दश च = द्वादश इति द्वन्द्वः । अष्टाधिका विंशतिः = अष्टाविंशतिः इति कर्मधारयोऽप्यस्ति ।

८. सङ्ख्याविशेषणपूर्वपदकर्मधारयस्य स्थानेऽसंज्ञायामस्य प्रयोगः । सङ्ख्यापूर्वपद-कर्मधारयः संज्ञायामेव भवति । यथा - सप्त ऋषयः = सप्तर्षयः । सप्तर्षीणामियं संज्ञा । विशेषणपूर्वपदः कर्मधारयः अयम् । अनेकवद्भावी द्विगुः अयम् इति क्वचित् लिख्यते । तत् तु अपाणिनीयम् । तादृशद्विगोः असम्भवात् ।

९. षाण्मातुरः इति तद्धितान्तः शब्दः । तत्र षट्शब्दस्य मातृशब्दस्य चैव द्विगुसमासः । तद्धितप्रत्ययेन विना तद्धितार्थद्विगोः स्थितिः नास्ति ।

१०. 'पञ्चगवधनः' इति बहुव्रीहिः । पञ्चशब्द-गोशब्दयोरेव द्विगुसमासः । उत्तरपद - द्विगोरपि बहुव्रीहिं विना स्थितिः नास्ति ।

## २.१.४. नञ्प्रभृतयः[११] पञ्च -

[नञ् - २.२.६,
कुगतिप्रादयः - २.२.१८,
उपपदमतिङ् - २.२.१९]

| *नाम* | *विग्रहः* | *समासः* |
|---|---|---|
| १. नञ्समासः | न धर्मः | अधर्मः |
| २. कुसमासः | कुत्सितः पुरुषः | कुपुरुषः |
| ३. गतिसमासः | अशुक्लं शुक्लं कृत्वा | शुक्लीकृत्य |
| ४. प्रादिसमासः | १. प्रगतः आचार्यः<br>२. अतिक्रान्तः देवम्<br>३. निष्क्रान्तः वाराणस्याः | प्राचार्यः<br>अतिदेवः<br>निर्वाराणसिः |
| ५. उपपदसमासः | कुम्भं करोति इति[१२] | कुम्भकारः |

११. 'कर्मधारयः नवधा' इत्युक्ते कर्मधारयस्यैव नव प्रभेदाः इत्यर्थः । किन्तु 'नञ्प्रभृतयः पञ्च' इत्युक्ते नञ्समासस्यैव पञ्च प्रभेदाः इति न मन्तव्यम् । अत एव प्रभृतिशब्दः प्रयुक्तः ।

१२. अत्र विग्रहे एव तिङन्तं श्रूयते, न तु समासे । अतः तिङन्तेन सह समासः इति न मन्तव्यम् ।

* * *

# २.२. बहुव्रीहिः

[अन्यपदार्थप्रधानः बहुव्रीहिः]

२.२. बहुव्रीहिः द्विधा – १. सामान्यः
२. विशेषः इति ।

## २.२.१. सामान्यः[१३] षोढा –

| *नाम* | *विग्रहः* | *समासः* |
|---|---|---|
| १. द्वितीयार्थबहुव्रीहिः | प्राप्तम् उदकं यं सः | प्राप्तोदकः (ग्रामः) |
| २. तृतीयार्थबहुव्रीहिः | पीतं क्षीरं येन सः | पीतक्षीरः (बालः) |
| ३. चतुर्थ्यर्थबहुव्रीहिः | दत्तः पशुः यस्मै सः | दत्तपशुः (रुद्रः) |
| ४. पञ्चम्यर्थबहुव्रीहिः | उद्धृतं जलं यस्मात् सः | उद्धृतजलः (कूपः) |
| ५. षष्ठ्यर्थबहुव्रीहिः | पीतम् अम्बरं यस्य सः | पीताम्बरः (हरिः) |
| ६. सप्तम्यर्थबहुव्रीहिः | बहूनि फलानि यस्मिन् सः | बहुफलः (वृक्षः) |

---

१३. समानाधिकरणबहुव्रीहिरेव सामान्यशब्देन अत्र व्यवहृतः । षट्स्वपि भेदेषु विग्रहे पदद्वयमपि प्रथमाविभक्त्यन्तं भवति । किन्तु अन्यपदार्थस्य बोधकं यद् इति पदं विग्रहे यादृशविभक्त्यन्तं भवति तद्विभक्त्यर्थनाम्ना व्यवहारः क्रियते । यथा - पीतम् अम्बरं यस्य सः – पीताम्बरः । पीतम् अम्बरञ्चेति विग्रहे पदद्वयमपि प्रथमान्तम् । अन्यपदार्थस्य बोधकं 'यद्' इति पदं षष्ठ्यन्तम् । अतः अयं षष्ठ्यर्थबहुव्रीहिः इत्युच्यते । बहुपदबहुव्रीहिः सामान्ये एव अन्तर्भवति ।

## २.२.२. विशेषः नवधा -

| नाम | विग्रहः | समासः |
|---|---|---|
| १. व्यधिकरणः | चक्रं पाणौ यस्य सः | चक्रपाणिः |
| २. सङ्ख्योत्तरपदः | विंशतेः समीपे ये सन्ति ते | उपविंशाः |
| ३. सङ्ख्योभयपदः | द्वौ वा त्रयो वा | द्वित्राः |
| ४. सहपूर्वपदः | शिष्येण सह वर्तते इति | सशिष्यः |
| ५. व्यतिहारलक्षणः | केशेषु केशेषु गृहीत्वा इदं युद्धं प्रवृत्तम् | केशाकेशि |
| ६. दिगन्तराललक्षणः | दक्षिणस्याः पूर्वस्याः दिशो यदन्तरालम् | दक्षिणपूर्वा |
| ७. नञ्बहुव्रीहिः[१४] | अविद्यमानः पुत्रः यस्य सः | अपुत्रः |
| ८. प्रादिबहुव्रीहिः | निर्गता कृपा यस्मात् सः | निष्कृपः |
| ९. उपमानपूर्वपदः | गजाननमिव आननं यस्य सः | गजाननः |

१४. नञ्बहुव्रीहिः, प्रादिबहुव्रीहिः, उपमानपूर्वपदबहुव्रीहिश्च समानाधिकरण-बहुव्रीहौ एव अन्तर्भवन्ति । तत्तन्नाम्ना व्याख्यानादिषु व्यवह्रियते इति ज्ञापनार्थं केवलं विशेषे योजिताः ।

* * *

# २.३. द्वन्द्वः

[उभयपदार्थप्रधानः द्वन्द्वः]

२.३. द्वन्द्वः द्विधा - १. इतरेतरः
२. समाहारः इति ।

## २.३.१. इतरेतरः द्विधा –

| *नाम* | *विग्रहः* | *समासः* |
|---|---|---|
| १. द्विपदद्वन्द्वः | रामश्च कृष्णश्च | रामकृष्णौ |
| २. बहुपदद्वन्द्वः | हरिश्च हरश्च गुरुश्च | हरिहरगुरवः |

## २.३.२. समाहारः द्विधा –

| *नाम* | *विग्रहः* | *समासः* |
|---|---|---|
| १. [१५]समाहारः | संज्ञा च परिभाषा च अनयोः समाहारः | संज्ञापरिभाषम् |
| २. [१६]नित्यसमाहारः | पाणी च पादौ च एतेषां समाहारः | पाणिपादम् |

---

१५. समाहारद्वन्द्वः सर्वत्र भवति । अतः घटपटम् इति, घटपटौ इति च भवति ।

१६. प्राणितूर्यसेनाङ्गानां समाहारः एव । इतरेतरः न भवति । 'पाणिपादाः' इति अपशब्दः एव ।

* * *

# २.४. अव्ययीभावः

[पूर्वपदार्थप्रधानः अव्ययीभावः]

२.४. अव्ययीभावः [१७]प्रायः त्रयस्त्रिंशद्धा ।
(प्रसिद्धाः केचन भेदाः प्रदर्श्यन्ते ।)

| *नाम* | *विग्रहः* | *समासः* |
|---|---|---|
| १. समीपार्थकः | कृष्णस्य समीपम् | उपकृष्णम् |
| २. अभावार्थकः | मक्षिकाणाम् अभावः | निर्मक्षिकम् |
| ३. योग्यतार्थकः | रूपस्य योग्यम् | अनुरूपम् |
| ४. वीप्सार्थकः | दिनं दिनं प्रति | प्रतिदिनम् |
| ५. पदार्थानतिवृत्त्यर्थकः | शक्तिम् अनतिक्रम्य | यथाशक्ति |
| ६. मर्यादार्थकः | आ मुक्तेः | आमुक्ति (संसारः) |
| ७. अभिविध्यर्थकः | आ बालेभ्यः | आबालम् (हरिभक्तिः) |
| ८. आभिमुख्यार्थकः | अग्निम् अभि | अभ्यग्नि |
| ९. मात्रार्थकः | शाकस्य लेशः | शाकप्रति |
| १०. अवधारणार्थकः | यावन्तः श्लोकाः | यावच्छ्लोकम् (अच्युतप्रणामाः) |
| ११. पारेशब्दयुक्तः | पारे समुद्रस्य | पारेसमुद्रम् |
| १२. मध्येशब्दयुक्तः | मध्ये गङ्गायाः | मध्येगङ्गम् |

---

१७. अव्ययीभावस्य गणनायां सूक्ष्मः क्लेशः अस्ति । अतः प्रायः इत्युक्तम् ।

* * *

## २.५. समासभेदसम्बद्धाः अन्ये केचन अंशाः

### २.५.१. एकशेषः –

एकशेषः समासो न । कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपासु पञ्चसु वृत्तिषु एकशेषः अन्यतमः । अतः समासः यथा वृत्तिः तथैव एकशेषोऽपि पृथक् वृत्तिरेव । अयम् एकशेषः द्वन्द्वसमासस्य अपवादः । अतः एकशेषस्यापि उदाहरणानि प्रदर्श्यन्ते ।

यथा – १. माता च पिता च = पितरौ
२. भ्राता च स्वसा च = भ्रातरौ
३. पुत्रश्च दुहिता च = पुत्रौ
४. हंसश्च हंसी च = हंसौ
५. स च रामश्च = तौ
६. स च यश्च = यौ
७. भवन्तश्च भवत्यश्च = भवन्तः
८. यूयं च वयं च = वयम्
९. रामश्च रामश्च = रामौ

### २.५.२. अलुक्समासः –

नायं पृथक् समासः । समासे कृते पूर्वोत्तरपदयोः विभक्त्योः लोपः भवतीति उक्तम् । क्वचित् पूर्वपदस्य विभक्तेः लोपः न भवति । तदा अलुक्समासः इति व्यवहारः ।

यथा – वनेचरः - अयम् उपपदसमासः ।
जनुषान्धः - अयं तृतीयातत्पुरुषः ।
आत्मनेपदम् - अयं चतुर्थीतत्पुरुषः ।
परस्मैपदम् - अयं चतुर्थीतत्पुरुषः ।
युधिष्ठिरः - अयं सप्तमीतत्पुरुषः ।
कण्ठेकालः - अयं व्यधिकरणबहुव्रीहिः ।
देवानांप्रियः - अयं षष्ठीतत्पुरुषः ।

## २.५.३. नित्यसमासः -

अयमपि न पृथक् समासः । अव्ययीभावे 'अव्ययं विभक्ति ........' इत्यादिना सूत्रचतुष्टयेन विहितः अव्ययीभावः (आहत्य चतुर्विंशतिः अस्ति।) नित्यसमासः । यत्र संज्ञादिषु समस्तपदेषु विग्रहस्यापेक्षया विशेषार्थस्य भानमस्ति तत्रापि नित्यसमास एव । अत एव नित्यसमासे अस्वपदविग्रहः । उपपदसमासादिषु यत्र अस्वपदविग्रहः प्रदर्श्यते तत्रापि नित्यसमासत्वम् एव ।

## २.५.४ . असमर्थसमासः –

परस्परान्वितयोरेव सुबन्तयोः समासः । किन्तु ययोः समासः इष्टः तयोः द्वयोः अन्वयः न भवति चेदपि क्वचित् समासः भवति ।

यथा - अपुनर्गेयाः श्लोकाः । पुनः न गेयाः इति विग्रहः । अत्र नञ्शब्दस्य पुनः शब्दस्य च (अपुनः) समासः जातः । किन्तु नञः अन्वयः गेयपदेनैव, न तु पुनः शब्देन । तथापि समासः कृतः । अत एव एषःअसमर्थसमासः इत्युच्यते । एवमेव सूर्यं न पश्यन्ति इति = असूर्यम्पश्याः इत्यादावपि ।

## २.५.५. वृत्तिः*

विग्रहवाक्यावयवपदार्थेभ्यः परः = अन्यः योऽयं विशिष्टैकार्थः, तत्प्रतिपादिका वृत्तिः । प्रथमविगृहीतानां पदानां प्रत्येकम् अर्थवत्त्वेन, समुदायशक्त्या विशिष्टैकार्थप्रतिपादिका वृत्तिः इति फलितम् ।

**वृत्तयः पञ्च ।**

कृत्-तद्धित-समास-एकशेष-सनाद्यन्तधातुरूपाः पञ्च वृत्तयः ।

---

* वृत्तिज्ञानं क्वचिदपेक्षितं भवति इत्यतः वृत्तिः सङ्क्षेपेण निरूपिता अत्र ।

यथा –

| *नाम* | *विग्रहः* | *उदाहरणम्* |
|---|---|---|
| १. कृद्वृत्तिः | पचति इति | पाचकः |
| २. तद्धितवृत्तिः | दशरथस्य अपत्यम् | दाशरथिः |
| ३. समासवृत्तिः | राज्ञः पुरुषः | राजपुरुषः |
| ४. एकशेषवृत्तिः | माता च पिता च | पितरौ |
| ५. सनाद्यन्तधातुवृत्तिः | १. पठितुम् इच्छति | पिपठिषति |
| | २. पुत्रम् आत्मन इच्छति | पुत्रकाम्यति |
| | ३. पुनः पुनः/ अतिशयेन वा नृत्यति | नरीनृत्यते |
| | ...................... | ............... |
| | ...................... | ............... |
| | ...................... | ............... |
| | ...................... | ............... |

* * *

# ३. पूर्वोत्तरपदयोः विशेषः

रमायाः पतिः = रमापतिः । अत्र विग्रहे 'रमायाः' इत्यत्र षष्ठीविभक्तिः, 'पतिः' इत्यत्र प्रथमाविभक्तिश्च श्रूयते । समासे कृते तयोः द्वयोरपि विभक्त्योः लोपः भवति । ततः समस्तात्पदात् पुनरपि प्रथमाविभक्तिः क्रियते इति प्रक्रियाक्रमः ।

यथा - रमा + ङस् + पति + स्<br>
रमा + ङस् + पति + स्<br>
रमा + पति<br>
रमापति + स् = रमापतिः

## ३.१. पूर्वपदस्य नियमाः

३.१. पूर्वपदस्य नियमाः* द्विधा - १. सामान्याः<br>
२. विशेषाः इति ।

### ३.१.१. सामान्याः –

सर्वेषु समासेषु एते सामान्यनियमाः सम्भवन्ति । समासे जाते पूर्वपदस्य विभक्तेः लोपे कृते तत् पदं **प्रातिपदिकरूपेण स्थितं** भवति । अतः समासे कृते पूर्वपदस्य **प्रातिपदिकं झटिति सदा स्मरणीयम्** । तदा इमे अंशाः स्मरणीयाः –

---

* पूर्वपदसम्बन्धिनः सर्वे नियमाः अत्र नोच्यन्ते । प्रतिशतं नवतिः नियमाः लिख्यन्ते ।

| नाम | नियमः | उदाहरणम् | प्रक्रिया |
|---|---|---|---|
| १. सन्धिः | सन्धीनामवसरोऽस्ति चेत् सन्धिः करणीय एव । | भगवतः अनुग्रहः = भगवदनुग्रहः । | भगवत् + अनुग्रह = भगवद् + अनुग्रह = भगवदनुग्रहः । |
| २.नकरास्य लोपः | नकारान्तं प्रातिपदिकं चेत् नकारस्य लोपः कर्तव्यः । | राज्ञः + पुरुषः = राजपुरुषः | राजन् + पुरुष = राज + पुरुष = राजपुरुषः । |
| ३. नञः लोपः | नञ्समासे नकारस्य (न्) लोपः करणीयः । | न + धर्मः = अधर्मः | न (न् + अ) + धर्म = अ + धर्म = अधर्मः |
| ४. नुडागमः | नञ्समासे उत्तरपदं यदि स्वरादि भवति तर्हि नलोपे जाते अकारात्परे नुड्(न्)- आगमः करणीयः । | न + ईश्वरः = अनीश्वरः | न (न् + अ) + ईश्वरः । = अ + ईश्वरः = अ + न् + ईश्वरः = अनीश्वरः |

## ३.१.२. विशेषाः -

केषुचित् समासेष्वेव विशेषनियमाः सम्भवन्ति ।

| *नाम* | *नियमः* | *उदाहरणम्* | *प्रक्रिया* |
|---|---|---|---|
| १. पुंवद्भावः | कर्मधारये समानाधिकरणबहुव्रीहौ च पूर्वपदं स्त्रीलिङ्गे विद्यमानं सत् भाषितपुंस्कमपि यदि भवति (उभयलिङ्गकं) तर्हि पुंल्लिङ्गवद्रूपं प्राप्नोति । | i. कर्म — दीर्घा + रज्जुः = दीर्घरज्जुः ।<br>ii. बहु — स्थिता + प्रज्ञा यस्य सः = स्थितप्रज्ञः । | दीर्घा + रज्जुः = दीर्घ + रज्जुः = दीर्घरज्जुः ।<br>स्थिता + प्रज्ञा = स्थित + प्रज्ञा = स्थितप्रज्ञः । |
| २. महतः आत्वम् | कर्मधारये समानाधिकरणबहुव्रीहौ च महतः तकारस्य आकारः भवति । | i. कर्म — महान् + देव = महादेवः ।<br>ii. बहु — महती सेना यस्य सः = महासेनः । | महत् + देव = मह + आ + देव = महा + देव = महादेवः ।<br>महती + सेना = महत् + सेना (पुंवद्भावः) मह + आ + सेना महा + सेना = महासेनः । |
| ३. आनङ् | विद्यायोनिसम्बन्धिनाम् ऋदन्तानां द्वन्द्वे आनङ् (आ) भवति । पुत्रशब्दे परेऽपि भवति । | माता च पिता च = मातापितरौ<br>पिता च पुत्रश्च = पितापुत्रौ | मातृ + पितृ = माता + पितृ = मातापितरौ । |
| ४. दीर्घः | कर्मव्यतिहारबहुव्रीहौ स्वरान्तस्य पूर्वपदस्य दीर्घो भवति । | मुष्ट्या मुष्ट्या प्रहृत्य इदं युद्धं प्रवृत्तम् = मुष्टीमुष्टि | मुष्टि + मुष्टि = मुष्टी + मुष्टि = मुष्टीमुष्टि |

## ३.२. उत्तरपदस्य नियमाः

३.२. उत्तरपदस्य नियमाः[१] द्विधा – १. सामान्यः
२. विशेषाः इति ।

### ३.२.१. सामान्यः –

सर्वेषु समासेषु एषः नियमः सम्भवति । समासे जाते उत्तरपदस्य विभक्तेः लोपे कृते तत् पदं प्रातिपदिकरूपेण स्थितं भवति । ततः परे केचन प्रत्ययाः क्वचित् भवन्ति । ते समासान्तप्रत्ययाः इत्युच्यन्ते ।

| *शब्दः* | *नियमः* | *प्रत्ययः* | *उदाहरणम्* |
|---|---|---|---|
| १. पथिन्शब्दः | पथिन् शब्दान्तस्य 'अ' इति प्रत्ययः भवति । [ऋकपूरब्धूः पथामानक्षे - ५.४.७४] | अ | दीर्घः पन्थाः = दीर्घपथः<br>रम्यः पन्थाः यस्य सः = रम्यपथः |

### ३.२.२. विशेषाः -

उत्तरपदसम्बन्धिनः विशेषनियमाः बहवः एकैकं समासमधिकृत्यैव प्रवृत्ताः । अतः एकैकस्यापि समासस्य नियमाः पृथगेव लिख्यन्ते ।

---

१. प्रसिद्धाः नियमाः लिखिताः ।

### ३.२.२.१. (अ) तत्पुरुषस्य नियमाः –

| *शब्दः* | *नियमः* | *प्रत्ययः* | *उदाहरणम्* |
|---|---|---|---|
| १. रात्रिशब्दः | सर्व-एकदेश-संख्यात-पुण्य-संख्या-अव्ययेभ्यः परः रात्रिशब्दः अच्प्रत्ययं प्राप्नोति । सर्वादिपूर्वकः रात्रिशब्दः अकारान्तः भवतीत्यर्थः ।[४] [एकदेशः = प्रथमातत्पुरुषे सम्भवनीयाः पूर्व - अपर - अधर - उत्तर - मध्य - पश्चिमादिशब्दाः] [[५]अहः - सर्वैकदेशसंख्यात - पुण्याच्च रात्रेः - ५.४.८७] | अच् (अ) | सर्वा रात्रिः = [२]सर्वरात्रः पूर्वं रात्रेः = पूर्वरात्रः । संख्याता रात्रिः = संख्यातरात्रः पुण्या रात्रिः = पुण्यरात्रः नवानां रात्रीणां समाहारः = नवरात्रम्[३] अतिक्रान्तः रात्रिम् = अतिरात्रः |

---

२. समासे रात्रिशब्दः यदा अकारान्तः भवति तदा पुंल्लिङ्गः भवति । (रात्राह्नाहाः पुंसि - २.४.२९)

३. संख्यापूर्वं रात्रं क्लीबम् ।

४. शुभरात्रिः, शिवरात्रिः इत्यादौ अस्य नियमस्य अप्रसक्त्या रात्रिशब्दः इकारान्तः स्त्रीलिङ्गश्च ।

५. अहन् शब्दस्योदाहरणम् - अहोरात्र इति । अयं द्वन्द्वसमासः ।

| | | | |
|---|---|---|---|
| २. राजन्- अहन्- सखिशब्दाः | राजन्शब्दः अहन्शब्दः सखिशब्दश्च तत्पुरुषान्ते श्रूयमाणाः टच्प्रत्ययं प्राप्नुवन्ति । त्रयोऽपि अकारान्ताः भवन्तीत्यर्थः । (राजाहःसखिभ्यष्टच् - ५.४.९१) | टच् (अ) | देवानां राजा = देवराजः<br>सप्तानाम् अह्नां समाहारः = सप्ताहः*<br>कृष्णस्य सखा = कृष्णसखः |
| ३. गोशब्दः | तत्पुरुषान्ते श्रूयमाणः गोशब्दः टच्प्रत्ययं प्राप्नोति । पुंल्लिङ्गे अकारान्तः, स्त्रीलिङ्गे ईकारान्तः भवतीत्यर्थः । (गोरतद्धितलुकि - ५.४.९२) | टच् (अ) | उत्तमः गौः = उत्तमगवः<br>श्रेष्ठा गौः = श्रेष्ठगवी |
| ४. नौशब्दः | द्विगुसमासस्यान्ते अर्धशब्दाच्च परं श्रूयमाणः नौशब्दः टच्प्रत्ययं प्राप्नोति । नौशब्दः अकारान्तः भवतीत्यर्थः । (नावो द्विगोः - ५.४.९९ अर्धाच्च - ५.४.१००) | टच् (अ) | तिसृणां नावां समाहारः = त्रिनावम्<br>अर्धं नावः = अर्धनावम्* |

---

* टच्प्रत्ययान्तः अहन्शब्दः पुंल्लिङ्गः । (रात्राह्नाहाः पुंसि - २.४.२९)

* नपुंसकत्वं लोकात् ।

## ३.२.२.१. (आ) समासान्तप्रत्ययस्य अपवादाः (तत्पुरुषे)

| | | |
|---|---|---|
| १. सु-अति-शब्दौ | यदा पूजनार्थे सु - अति - शब्दौ भवतः ताभ्यां परः शब्दः समासान्तं प्रत्ययं न प्राप्नोति ।<br>(न पूजनात् - ५.४.६९) | शोभनः राजा = सुराजा<br>अतिशयितः राजा = अतिराजा |
| २. किंशब्दः | कुत्सायां यः किंशब्दः तस्मात्परः शब्दोऽपि समासान्तप्रत्ययं न प्राप्नोति ।<br>(किमः क्षेपे - ५.४.७०) | कुत्सितः राजा = किंराजा<br>कुत्सिता सखा = किंसखा<br>कुत्सिता गौः = किंगौः |
| ३. नञ् | नञ्पूर्वपदः तत्पुरुषः समासान्तप्रत्ययं न प्राप्नोति ।<br>पथिन्शब्दस्तु विकल्पेन ।<br>(नञस्तत्पुरुषात् - ५.४.७१<br>पथो विभाषा - ५.४.७२) | न राजा = अराजा<br>न सखा = असखा<br>न पन्थाः = अपन्थाः / अपथम्* |

---

* अपथं नपुंसकम् - २.४.३०

## ३.२.२.२. बहुव्रीहेः नियमाः

| | | | |
|---|---|---|---|
| १. धर्मशब्दः | धर्मशब्दान्तः बहुव्रीहिः अनिच्प्रत्ययं प्राप्नोति । बहुव्रीहौ धर्मशब्दः नकारान्तः भवतीत्यर्थः । (धर्मादनिच्केवलात् - ५.४.१२४) | अनिच् (अन् ) | दृष्टः धर्मः येन सः - दृष्टधर्मा । |
| २......... | व्यतिहारलक्षणः इच्प्रत्ययं प्राप्नोति । अव्ययं च भवति । (इच्कर्मव्यतिहारे - ५.४.१२७) | इच् (इ) | दण्डैः दण्डैः प्रहृत्य इदं युद्धं प्रवृत्तं - दण्डादण्डि |
| ३.धनुःशब्दः | धनुःशब्दान्तः बहुव्रीहिः अनङ् -आदेशं प्राप्नोति । धनुःशब्दः नकारान्तः भवति इत्यर्थः । (धनुषश्च - ५.४.१३२) | अनङ् (अन्) | गाण्डीवं धनुः यस्य सः - गाण्डीवधन्वा । |
| ४.जायाशब्दः | जायाशब्दान्तः बहुव्रीहिः निङ्-आदेशं प्राप्नोति । (जायाया निङ् - ५.४ १३४) | निङ् (नि) | कौसल्या जाया यस्य सः - कौसल्याजानिः |
| ५.गन्धशब्दः | i) उत्-पूति-सु-सुरभिशब्देभ्यः परः गन्धशब्दः 'इत्' इत्यादेशं प्राप्नोति । (गन्धस्येदुत्पूतिसुसुरभिभ्यः - ५.४.१३५ ii) अल्पार्थे विद्यमानः गन्धशब्दः बहुव्रीहौ 'इत्' इत्यादेशं प्राप्नोति । (अल्पाख्यायाम् - ५.४.१३६) iii) उपमानात्परः गन्धशब्दोऽपि 'इत्' इत्यादेशं प्राप्नोति । (उपमानाच्च - ५.४.१३७) | इत् (इ) | उद्गतः गन्धः यस्य सः - उद्गन्धिः पूतिः गन्धः यस्य सः - पूतिगन्धिः शोभन गन्धः यस्य सः - सुगन्धिः सुरभिः गन्धः यस्य सः - सुरभिगन्धिः घृतस्य गन्धः (लेशः) यस्मिन् तत् - घृतगन्धि (भोजनम्) । मत्स्यगन्ध इव गन्धः यस्याः सा - मत्स्यगन्धिः । |

| | | | |
|---|---|---|---|
| ६. पादशब्दः | संख्यापूर्वस्य सुपूर्वस्य च पादशब्दस्य अकारस्य लोपः भवति ।<br>(संख्यासुपूर्वस्य - ५.४.१४०) | | द्वौ पादौ यस्य सः –द्विपाद्<br>शोभनौ पादौ यस्य सः – सुपाद् । |
| ७. ईकारान्तः ऊकारान्तः ऋकारान्तः च शब्दः | ईकारान्तस्त्रीलिङ्गः ऊकारान्तस्त्रीलिङ्गः ऋकारान्तश्च शब्दः बहुव्रीहौ अन्ते श्रूयमाणः 'कप्'प्रत्ययं प्राप्नोति ।<br>(नद्यृतश्च - ५.४.१५३) | कप् (क) | तीर्णा नदी येन सः – तीर्णनदीकः<br>दृष्टा वधूः येन सः – दृष्टवधूकः<br>नदी माता यस्य सः – नदीमातृकः (देशः) । |
| ८.शिष्टाः शब्दाः | पूर्वोक्तेभ्यः* शब्देभ्यः भिन्नाः शब्दाः समानाधिकरणबहुव्रीहौ अन्ते श्रूयमाणाः विकल्पेन कप्प्रत्ययं प्राप्नुवन्ति ।<br>(शेषाद्विभाषा - ५.४.१५४) | | कठोरं चेतः यस्य सः – कठोरचेतस्कः/ कठोरचेताः |
| ९. आकारान्तः गोश्ब्दश्च | आकारान्तस्त्रीलिङ्गः शब्दः गोशब्दश्च बहुव्रीहौ अन्ते श्रूयमाणः ह्रस्वः भवति । कप्प्रत्यये परे तु आकारान्तः स्त्रीलिङ्गः विकल्पेन ह्रस्वो भवति ।<br>(गोस्त्रियोरुपसर्जनस्य - १.२.४८<br>आपोऽन्यतरस्याम् - ७.४.१५) | | अधीता विद्या येन सः – अधीतविद्यः/ अधीतविद्यकः / अधीतविद्याकः ।<br>चित्राः गावः यस्य सः – चित्रगुः (गोपः) । |

* पूर्वोक्ताः – बहुव्रीहौ बहुभ्यः शब्देभ्यः समासान्तप्रत्ययाः विहिताः । सर्वसमाससाधारणप्रत्यया अपि केभ्यश्चित् विहिताः । ते शब्दाः पूर्वोक्तशब्देन ग्राह्याः । न तु अत्र पूर्वोक्ता एव ।

## ३.२.२.३. द्वन्द्वसमासस्य नियमः

| शब्दः | नियमः | प्रत्ययः | उदाहरणम् |
|---|---|---|---|
| १. चवर्गाद्यन्तः | समाहारद्वन्द्वे अन्ते श्रूयमाणाः चवर्गान्तः दकारान्तः षकारान्तः हकारान्तश्च 'टच्'प्रत्ययं प्राप्नुवन्ति । [द्वन्द्वाच्चुदष - हान्तात्समाहारे - ५-४-१०६] | टच् (अ) | वाक् च त्वक् च अनयोः समाहारः = वाक्त्वचम् । क्षत्रियाश्च वणिजश्च एतेषां समाहारः = क्षत्रियवणिजम् सम्पच्च विपच्च अनयोः समाहारः = सम्पद्विपदम् । वाक् च त्विट् च अनयोः समाहारः = वाक्त्विषम् छत्रं च उपानत् च अनयोः समाहरः = छत्रोपानहम् । |

## ३.२.२.४. अव्ययीभावस्य नियमाः

| नियमः | प्रत्ययः | उदाहरणम् |
|---|---|---|
| १. अव्ययीभावे अन्ते श्रूयमाणः - i) अकारान्तः आकारान्तो वा शब्दः अकारान्तनपुंसकस्य एकवचनमिव । | | - कृष्णस्य समीपम् = उपकृष्णम् । - शालायाः समीपम् = उपशालम् । |

| नियमः | प्रत्ययः | उदाहरणम् |
|---|---|---|
| ii) इकारान्तः ईकारान्तो वा शब्दः वारिशब्दस्य एकवचनमिव । | | शक्तिम् अनतिक्रम्य = यथाशक्ति । आ कन्याकुमार्याः = आकन्याकुमारि । |
| iii) उकारान्तः, ऊकारान्तः, ओकारान्तः, औकारान्तः वा शब्दः मधुशब्दस्य एकवचनमिव । | | वस्तूनाम् अभावः = निर्वस्तु । वधूं वधूं प्रति = प्रतिवधु । गोः समीपम् = उपगु*। |
| iv) ऋकारान्तशब्दः ऋकारान्तनपुंसकस्य एकवचनमिव । सर्वोऽपि अव्ययीभावः अव्ययं भवति । | | कार्यकर्तारं कार्यकर्तारं प्रति = प्रतिकार्यकर्तृ । |
| २. अव्ययीभावे अन्ते श्रूयमाणः अन्नन्तः टच्प्रत्ययं प्राप्नोति । नपुंसकं चेत् विकल्पेन । टच् प्रत्ययान्तोऽयमन्नन्तः अकारान्तनपुंसकस्य एकवचनमिव भवति इति फलितं भवति । | (टच्) अ | आत्मनि इति = अध्यात्मम् कर्माणि अनतिक्रम्य = यथाकर्मम् / यथाकर्म |

* आयतीगवम् इत्येकं निपातनाद् अकारान्तम् ।

## ३.३. लिङ्गानुसरणम् *

| *नियमः* | *उदाहरणम्* |
|---|---|
| १. इतरेतरद्वन्द्वस्य तत्पुरुषस्य च उत्तरपदस्य यल्लिङ्गं तद्भवति । [परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः - २.४.२६] | - वृषभश्च महिषी च = वृषभमहिष्यौ ।<br>- अर्धं विरामस्य = अर्धविरामः । |
| २. समाहारद्वन्द्वः द्विगुश्च नपुंसकं भवति । [स नपुंसकम् - २.४.१७] | - पाणी च पादौ च एतेषां समाहारः = पाणिपादम् ।<br>- पञ्चानां गवां समाहारः = पञ्चगवम् |
| ३. अकारान्तोत्तरपदः द्विगुः स्त्रीलिङ्गः ईकारान्तश्च भवति । [ **पञ्चपात्रं, त्रिभुवनम्, चतुर्युगमित्यत्र नायं नियमः।] | - त्रयाणां लोकानां समाहारः = त्रिलोकी |
| ४. बहुव्रीहिः त्रिलिङ्गकः भवति । | - प्राप्तम् उदकं यं सः = प्राप्तोदकः (ग्रामः)<br>- प्राप्तम् उदकं यां सा = प्राप्तोदका (नगरी) ।<br>- प्राप्तम् उदकं यत् तत् = प्राप्तोदकम् (नगरम्) । |
| ५. अव्ययीभावः सर्वोऽपि अव्ययं भवति । | - शक्तिम् अनतिक्रम्य = यथाशक्ति । |

* प्रमुखाः नियमाः लिखिताः । अन्ये नियमाः अपि सन्ति । अपवादाः अपि सन्ति ।

** ४५ - पृष्ठं पश्यन्तु ।

# ३.४. एष सङ्ग्रहः*

## ३.४.१. पूर्वपदे स्मरणीयाः

### ३.४.१.१. सामान्यनियमाः -

| *स्मरणीयः अंशः* | *उदाहरणम्* |
|---|---|
| १. सन्धिः | भगवदनुग्रहः |
| २. नकारलोपः | राजपुरुषः |
| ३. नञः नलोपः | अधर्मः |
| ४. नुडागमः | अनीश्वरः |

### ३.४.१.२. विशेषनियमाः -

| *स्मरणीयः अंशः* | *समासनाम* | *उदाहरणम्* |
|---|---|---|
| १. पुंवद्भावः | कर्मधारयः<br>समानाधिकरणबहुव्रीहिः च | दीर्घरज्जुः<br>स्थितप्रज्ञः |
| २. महतः आत्वम् | कर्मधारयः<br>समानाधिकरणबहुव्रीहिः च | महादेवः<br>महासेनः |
| ३. आनङ् | द्वन्द्वः | मातापितरौ<br>पितापुत्रौ |
| ४. दीर्घः | कर्मव्यतिहारबहुव्रीहिः | मष्टीमुष्टि |

* सप्तदशपृष्ठतः अष्टाविंशतिपृष्ठपर्यन्तं ये अंशाः उक्ताः ते अत्र संक्षेपेण स्मरणार्थं पुनः लिखिताः ।

## ३.४.२. उत्तरपदे स्मरणीयाः

### ३.४.२.१. सामान्यनियमाः

| | *प्रत्ययः* | *अन्तः* | *समासः* | *उदाहरणम्* |
|---|---|---|---|---|
| १. पथिन् | अ | अकारान्तः | कर्मधारयः | दीर्घपथः |
| | ,, | ,, | बहुव्रीहिः | रम्यपथः |
| | ,, | ,, | द्वन्द्वः | तीरपथौ |
| | ,, | ,, | नञ्तत्पुरुषः | अपथम् |
| | – | नकारान्तः | नञ्तत्पुरुषः | अपन्थाः |

## ३.४.२.२. विशेषनियमाः

### ३.४.२.२. (अ) तत्पुरुषः

| | *प्रत्ययः* | *अन्तः* | *लिङ्गम्* | *उदाहरणम्* |
|---|---|---|---|---|
| १. रात्रि | अच् (अ) | अकारान्तः | पुंल्लिङ्गः | सर्वरात्रः |
| | ,, | ,, | ,, | पूर्वरात्रः |
| | ,, | ,, | ,, | अपररात्रः |
| | ,, | ,, | ,, | अर्धरात्रः |
| | ,, | ,, | ,, | उत्तररात्रः |
| | ,, | ,, | ,, | मध्यरात्रः |
| | ,, | ,, | ,, | पश्चिमरात्रः |
| | ,, | ,, | ,, | संख्यातरात्रः |
| | ,, | ,, | ,, | पुण्यरात्रः |
| | ,, | ,, | ,, | अतिरात्रः |
| | ,, | ,, | नपुंसकलिङ्गः | नवरात्रम् |

| | प्रत्ययः | अन्तः | लिङ्गम् | उदाहरणम् |
| --- | --- | --- | --- | --- |
| २. राजन् | टच् (अ) | अकारान्तः | पुंल्लिङ्गः | देवराजः |
| ,, | टच् | ईकारान्तः | स्त्रीलिङ्गः | अतिराजी |
| अहन् | टच् | अकारान्तः | पुंल्लिङ्गः | सप्ताहः |
| सखि | ,, | ,, | ,, | कृष्णसखः |
| ,, | ,, | ईकारान्तः | स्त्रीलिङ्गः | अतिसखी |
| ३. नौ | ,, | अकारान्तः | नपुंसकलिङ्गः | त्रिनावम् |
| ,, | ,, | ,, | ,, | अर्धनावम् |
| [यदा पूर्वत्र एते भवन्ति तदा समासान्त-प्रत्ययाः न भवन्ति ।] ↓ | | | | |
| ४. सु | — | नकारान्तः | पुंल्लिङ्गः | सुराजा |
| ,, | | इकारान्तः | ,, | सुसखा |
| अति | | नकारान्तः | ,, | अतिराजा |
| ,, | | इकारान्तः | ,, | अतिसखा |
| ५. किम् | — | नकारान्तः | ,, | किंराजा |
| ,, | | इकारान्तः | ,, | किंसखा |
| ,, | | ओकारान्तः | स्त्रीलिङ्गः/ पुंल्लिङ्गः | किंगौः |
| ६. नञ् | — | नकारान्तः | पुंल्लिङ्गः | अराजा |
| ,, | | इकारान्तः | ,, | असखा |
| ,, | | नकारान्तः | ,, | अपन्थाः |
| ,, | अप् | अकारान्तः | नपुंसकलिङ्गः | अपथम् |

### ३.४.२.२. (आ) बहुव्रीहिः

| *शब्दः* | *प्रत्ययः* | *अन्तः* | *उदाहरणम्* |
|---|---|---|---|
| १. धर्म | अनिच् (अन्) | नकारान्तः | दृष्टधर्मा |
| २. .... | इच् (इ) | इकारान्तः | दण्डादण्डि |
| ३. धनुस् | अनङ् (अन्) | नकारान्तः | गाण्डीवधन्वा |
| ४. जाया | निङ् (नि) | इकारान्तः | कौसल्याजानिः |
| ५. गन्धः | इत् (इ) | इकारान्तः | उद्गन्धिः |
| ,, | ,, | ,, | सुगन्धिः |
| ,, | ,, | ,, | सुरभिगन्धिः |
| ,, | ,, | ,, | घृतगन्धिः |
| ,, | ,, | ,, | मत्स्यगन्धिः |
| ६. पादः | (लोपः) | दकारान्तः | द्विपाद् |
| ,, | ,, | ,, | सुपाद् |
| ७. ईकारान्तः | कप् (क) | अकारान्तः | तीर्णनदीकः |
| ऊकारान्तः | ,, | ,, | दृष्टवधूकः |
| ऋकारान्तः | ,, | ,, | नदीमातृकः |
| ८. शिष्टाः | कप् (क) | अकारान्तः | कठोरचेतस्कः |
| | (विकल्पेन) | तत्तदन्तः | कठोरचेताः |
| ९. आकारान्तः | ह्रस्वः | अकारान्तः | अधीतविद्यः |
| | कप् ह्रस्वः च | ,, | अधीतविद्यकः |
| | (विकल्पेन ह्रस्वः) | ,, | अधीतविद्याकः |
| १०. गो | ह्रस्वः | उकारान्तः | चित्रगुः |

### ३.४.२.२. (इ) द्वन्द्वः

| *शब्दः* | *प्रत्ययः* | *अन्तः* | *लिङ्गम्* | *उदाहरणम्* |
|---|---|---|---|---|
| १. चवर्गान्तः | टच् | अकारान्तः | नपुंसकलिङ्गः | वाक्त्वचम् |
| दकारान्तः | ,, | ,, | ,, | सम्पद्विपदम् |
| षकारान्तः | ,, | ,, | ,, | वाक्त्विषम् |
| हकारान्तः | ,, | ,, | ,, | छत्रोपानहम् |

### ३.४.२.२. (ई) अव्ययीभावः

| *शब्दः* | *प्रत्ययः* | *अन्तः* | *लिङ्गम्* | *उदाहरणम्* |
|---|---|---|---|---|
| अकारान्तः | — | अकारान्तः | नपुंसकलिङ्गः | उपकृष्णम् |
| आकारान्तः | — | ,, | अव्ययं वा | उपशालम् |
| इकारान्तः | — | इकारान्तः | ,, | यथाशक्ति |
| ईकारान्तः | — | ,, | ,, | आकन्याकुमारि |
| उकारान्तः | — | उकारान्तः | ,, | निर्वस्तु |
| ऊकारान्तः | — | ,, | ,, | प्रतिवधु |
| ओकारान्तः | — | ,, | ,, | उपगु |
| ऋकारान्तः | — | ऋकारान्तः | ,, | प्रतिकार्यकर्तृ |
| अन्नन्तः | टच् (अ) | अकारान्तः | ,, | अध्यात्मम् |

* * *

चतुर्थं प्रकरणम्

# ४. समासभेदविस्तरः

**सोदाहरणं समासभेदाः द्वितीयप्रकरणे निरूपिताः** । एकैकस्य भेदस्य एकैकम् उदाहरणं प्रदर्शितम् । आदर्शभूतानि तानि उदाहरणानि मनसि निधायैव बहुत्र समासं निश्चेतुं प्रभवामः । तथापि समासे प्राधान्येन अंशद्वयं ज्ञातव्यं भवति । तथा हि -

१. क्वचित् परिगणितैरेव शब्दैः समासो भवति ।

**यथा** – [a]चोरात् भयम् = चोरभयम् । [b]वनं प्राप्तः = वनप्राप्तः इति भवति । किन्तु चोरात् रक्षणम् = चोररक्षणम् इति, वनं प्राप्तवान् = वनप्राप्तवान् इति वा समासः उक्तार्थे न भवति ।

२. पूर्वपदव्यवस्था[c] –

**यथा** – प्रथमः पुरुषः इति पुरुषः प्रथमः इति वा विग्रहे कृतेऽपि समासे प्रथमपुरुष इत्येव भवति, न तु पुरुषप्रथम इति ।

एवम् अन्येऽपि सूक्ष्मांशाः ज्ञातव्याः भवन्ति । अतः **द्वितीयप्रकरणे उक्तानां भेदानामेव विस्तरेण निरूपणम् अत्र क्रियते** । तावतापि सर्वोऽपि समासविषयः उक्तो न भवति । प्रधानविषयाः केवलं निरूपिताः भवन्ति ।

## ४.१.४. तत्पुरुषः

### ४.१.१.१. प्रथमातत्पुरुषः

१. पूर्व-अपर-अधर-उत्तर-शब्दाः समांशवाची अर्धशब्दश्च अवयविवाचक-सुबन्तेन समस्यन्ते । किन्तु अवयवी एकत्वसंख्याविशिष्टो भवेत् ।

[d]पूर्वं कायस्य = पूर्वकायः[e] अपरं गृहस्य = अपरगृहम्,

a. ७ - पृष्ठं पश्यन्तु । b. ७ - पृष्ठं पश्यन्तु । c. ६२ - पृष्ठं पश्यन्तु । d. पूर्वापराधरोत्तरम् एकदेशिनैकाधिकरणे - २.२.१, e. पूर्वः छात्राणां = पूर्वच्छात्रा इति नं भवति । अवयवी एकवचनान्तो भवेदिति उक्तत्वात् ।

अधरं भवनस्य = अधरभवनम्, उत्तरं रात्रे = [illegible]
[f]अर्धं पिप्पल्याः = अर्धपिप्पली

२. सर्वोऽप्येकदेशवाचकः शब्दः कालवाचकेन शब्देन समस्यते ।

[h]मध्यम् अह्नः = मध्याह्नः । [h]सायम् अह्नः = सायाह्नः
[h]पूर्वम् अह्नः = पूर्वाह्णः [h]अपरम् अह्नः = अपराह्णः,
मध्यं रात्रेः = मध्यरात्रः[g] पश्चिमं रात्रेः = पश्चिमरात्रः[g]

### ४.१.१.२. द्वितीयातत्पुरुषः

द्वितीयाविभक्त्यन्तं[२] सुबन्तं, श्रित-अतीत-पतित-गत-अत्यस्त-प्राप्त-आपन्न-[३]गमि-गमि-बुभुक्षु-शब्दैः समस्यते ।

कृष्णं श्रितः = कृष्णश्रितः, शालां प्राप्तः = शालाप्राप्तः,
दुःखम् अतीतः = दुःखातीतः संशयम् आपन्नः = संशयापन्नः
कूपं पतितः = कूपपतितः ग्रामं गमी = ग्रामगमी,
ग्रामं गतः = ग्रामगतः, नगरं गामी = नगरगामी,
मार्गम् अत्यस्तः = मार्गात्यस्तः अन्नं बुभुक्षुः = अन्नबुभुक्षुः

एतेषु उत्तरपदं श्रितादिषु दशसु अन्यतमं भवेत्, नान्यत् । अत एव अन्नं भुक्तवान् = अन्नभुक्तवान् इति समासो न भवति ।

### ४.१.१.३. तृतीयातत्पुरुषः

१. तृतीयाविभक्त्यन्तं[४] सुबन्तं, पूर्व-सदृश-सम-ऊनार्थ-कलह-निपुण-मिश्र-[५]संमिश्र-श्लक्ष्ण-अवर[६]-शब्दैः समस्यते । (ऊनार्थः = ऊनार्थ-बोधकानि पर्यायपदानि ।)

---

f. ग्रामार्धः इति तु षष्ठीतत्पुरुषः । अतः ग्रामस्य अर्ध इति पुंल्लिङ्गेनार्धशब्देन विग्रहो वक्तव्यः । g.२१- पृष्ठं पश्यन्तु । h. प्रथमातत्पुरुषे 'अहन्'शब्दः यद्युत्तरपदं भवति तदा अहन्शब्दस्य स्थाने 'अह्न' इत्यादेशः भवति ।,

२. द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः - २.१.२४,

३. गम्यादीनाम् उपसंख्यानम् (वा),

४. पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः -२.१.३१,

५. मिश्रग्रहणे सोपसर्गस्यापि ग्रहणम् । 'सम्मिश्र' इति प्रयोगप्राचुर्यात् उपात्तम् । सति प्रयोगे उपसर्गान्तरेण युक्तस्यापि ग्रहणं कर्तव्यम् ।

६. अवरस्योपसंख्यानम् (वा) ।

मासेन पूर्वः = मासपूर्वः    आचारेण निपुणः = आचारनिपुणः
मात्रा सदृशः = मातृसदृशः,    गुडेन मिश्रः = गुडमिश्रः,
पित्रा समः = पितृसमः,    गुडेन संमिश्रः, = गुडसंमिश्रः,
माषेण ऊनम् = माषोनम्,    आचारेण श्लक्ष्णः = आचारश्लक्ष्णः,
माषेण विकलम् = माषविकलम्, मासेन अवरः = मासावरः,
वाचा कलहः = वाक्कलहः

२. तृतीयाविभक्त्यन्तं[७] कृदन्तेन प्रायः समस्यते (तृतीयाविभक्त्यन्तं = कर्तृ-तृतीयान्तं (हरिणा त्रातः) करणतृतीयान्तं (नखैः भिन्नः) वा भवेत् ।)

हरिणा त्रातः = हरित्रातः    नखैः भिन्नः = नखभिन्नः
तेन कृतम् = तत्कृतम्    खड्गेन छिन्नः = खड्गच्छिन्नः
कालिदासेन रचितम् = कालिदासरचितम्
परशुना विच्छिन्नः = परशुविच्छिन्नः

प्रायः इति कथनात् दण्डेन ताडितवान् = दण्डताडितवान् इति समासो न भवति ।

३. संस्कारद्रव्यं[८] दध्यादि अन्नवाचिना,[९] मिश्रीकरणं गुडादि च भक्ष्यवाचिना समस्यते ।

दध्ना ओदनः = दध्योदनः    गुडेन पृथुकाः = गुडपृथुकाः
क्षीरेण ओदनः = क्षीरोदनः    गुडेन धानाः = गुडधानाः
(धानाः = भ्रष्टयवाः)

### ४.१.१.४. चतुर्थीतत्पुरुषः

चतुर्थीविभक्त्यन्तं[१०] तदर्थ-अर्थ-बलि-हित-सुख-रक्षितशब्दैः समस्यते ।

[i] *तदर्थः = चतुर्थ्यन्तवाच्याय यत् तत् । प्रकृतिविकृतिभावे एव अयं (तादर्थ्येन) समासः । यथा - कुण्डलाय हिरण्यम् । चतुर्थ्यन्तवाच्यं*

---

७. कर्तृकरणे कृता बहुलम् - २.१.३२,
८. अन्नेन व्यञ्जनम् - २.१.३४
९. भक्ष्येण मिश्रीकरणम् - २.१.३५,
१०. चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः - २.१.३६

*कुण्डलम् । तस्मै कुण्डलाय यत्तत् हिरण्यम् । अत्र हिरण्यं प्रकृतिः । कुण्डलं विकृतिः ।*

ii) *अर्थः = अर्थशब्देन[११] चतुर्थ्यन्तं नित्यं समस्यते । विशेष्यस्य यल्लिङ्गं तल्लिङ्गं च भवति । नित्यसमासत्वात् विग्रहवाक्ये अर्थ-शब्दस्य श्रवणं न भवति । यथा- द्विजाय अयम् = द्विजार्थः (सूपः)]*

यूपाय दारु = यूपदारु
कुण्डलाय हिरण्यम् = कुण्डलहिरण्यम्
द्विजाय अयम् = द्विजार्थः (सूपः)
छात्राय इयम् = छात्रार्था (यवागूः)
शिशवे इदम् = शिश्वर्थम् (पयः)
भूतेभ्यो बलिः = भूतबलिः
गवे हितम् = गोहितम्
गवे सुखम् = गोसुखम्
गवे रक्षितम् = गोरक्षितम्

अर्थादीन् पञ्च शब्दान् विहाय चतुर्थ्यन्तम् अन्येन केनाऽपि पदेन न समस्यते । (प्रकृतिविकृतिभावे तु तदर्थसमासो भवति । तादृशानि विरलानि एव उदाहरणानि ।) अतः गुरुदक्षिणा इत्यादौ गुरवे दक्षिणा इति न विग्रहः । किन्तु गुरोः दक्षिणा इत्येव विग्रहः ।

### ४.१.१.५. पञ्चमीतत्पुरुषः

i) पञ्चमीविभक्त्यन्तं [१२]भय-भीत-भीति-भी[१३] - शब्दैः समस्यते ।

चोराद् भयम् = चोरभयम्
वृकात् भीतिः = वृकभीतिः
व्याघ्राद् भीतः = व्याघ्रभीतः
वृश्चिकात् भीः = वृश्चिकभीः

एतेष्वपि उत्तरपदं, भयादिषु अन्यतमं भवेत्, नान्यत् । अतः चोराद् रक्षितः = चोररक्षितः, व्याघ्रात् त्रातः = व्याघ्रत्रातः इति समासो न भवति । ग्रामात् निर्गतः = ग्रामनिर्गतः, अधर्माद् जुगुप्सुः = अधर्मजुगुप्सुः इति समासो भवतीति भाष्यकारः ।

---

११. अर्थेन नित्यसमासो विशेष्यलिङ्गता चेति वक्तव्यम् । (वा)

१२. पञ्चमी भयेन - २.१.३७ ।

१३. भयभीतभीतिभीभिरिति वाच्यम् । (वा)

ii) कतिपयान्येव पञ्चम्यन्तानि[१४] अपेत-अपोढ-मुक्त-पतित-अपत्रस्तशब्दैः समस्यन्ते ।

सुखाद् अपेतः = सुखापेतः　　स्वर्गात् पतितः = स्वर्गपतितः
कल्पनायाः अपोढः = कल्पनापोढः तरङ्गात् अपत्रस्तः = तरङ्गापत्रस्तः
चक्राद् मुक्तः = चक्रमुक्तः

अत्रापि उत्तरपदम् अपेतादिषु पञ्चसु अन्यतमं भवेत्, नान्यत् । किन्तु एषः समासः सर्वत्र न भवति । शिष्टप्रयोगं दृष्ट्वा समासो वक्तव्यः । अतः प्रासादात् पतितः = प्रासादपतितः इति समासो न भवति ।

iii) पञ्चम्यन्तः [१५]शतशब्दः सहस्रशब्दश्च पर इति शब्देन समस्यते ।
शतात् परे = परश्शताः
सहस्रात् परे = परस्सहस्राः
राजदन्तादिगणे निपातनात् शतसहस्रशब्दयोः परनिपातत्वं सुडागमश्च ।

### ४.१.१.६. षष्ठीतत्पुरुषः

षष्ठीविभक्त्यन्तं[१६] सुबन्तेन समस्यते ।

राज्ञः पुरुषः = राजपुरुषः　　तस्य उपरि[१८] = तदुपरि
देवस्य पूजकः = देवपूजकः　　मद्राणां राजा[१९] = मद्रराजः
भुवः भर्ता = भूभर्ता　　कृष्णस्य सखा[१९] = कृष्णसखः
अर्थस्य गौरवम्[१७] = अर्थगौरवम्　　विष्णोः पूः[२०] = विष्णुपुरम्
बुद्धेः मान्द्यम् = बुद्धिमान्द्यम्　　राज्ञः धूः[२०] = राजधुरा
त्रयाणां पन्थाः[२०] = त्रिपथम्

---

१४. अपेतापोढमुक्तपतितापत्रस्तैरल्पशः - २.१.३८,
१५. शतसहस्रौ परेणेति वक्तव्यम् (वा)
१६. षष्ठी - २.२.८,
१७. गुणार्थेन षष्ठी न समस्यते । किन्तु निषेधोऽयं क्वाचित्कः ।
१८. अव्ययेन षष्ठी न समस्यते । यथा - ब्राह्मणस्य कृत्वा । किन्तु कृद्भिन्नेन अव्ययेन षष्ठी समस्यते ।
१९. राजाहःसखिभ्यष्टच् - ५.४.९१ ।
२०. ऋक्पूरब्धूः पथामानक्षे - ५.४.७४ इति अच्प्रत्ययः ।

पुरुषस्य आयुः[२१] = पुरुषायुषम्
ब्रह्मणः वर्चः[२२] = ब्रह्मवर्चसम्
राज्ञः वर्चः[२३] = राजवर्चसम्
पाणिनेः उपज्ञा[२४] = पाणिन्युपज्ञम् (ग्रन्थः) (पाणिनिना प्रथमं ज्ञायमानः)
इक्षूणां छाया[२५] = इक्षुच्छायम्

### ४.१.१.७. सप्तमीतत्पुरुषः

i) सप्तमीविभक्त्यन्तं शौण्ड[२६]-अधि-धूर्त-कितव-प्रवीण-पण्डित-कुशल-निपुण-चपल-सिद्ध-शुष्क-पक्व-[२७]बन्ध-शब्दैः समस्यते ।

| | |
|---|---|
| अक्षेषु शौण्डः = अक्षशौण्डः | शास्त्रेषु निपुणः = शास्त्रनिपुणः |
| ईश्वरे अधि = ईश्वराधीनः | कार्ये चपलः = कार्यचपलः |
| अक्षेषु धूर्तः = अक्षधूर्तः | काश्यां सिद्धः = काशीसिद्धः |
| अक्षेषु कितवः = अक्षकितवः | (सिद्धः = निष्पन्नः) |
| वीणायां प्रवीणः = वीणाप्रवीणः | आतपे शुष्कः = आतपशुष्कः |
| वेदे पण्डितः = वेदपण्डितः | स्थाल्यां पक्वः = स्थालीपक्वः |
| काव्ये कुशलः = काव्यकुशलः | चक्रे बन्धः = चक्रबन्धः |

ii) सप्तम्यन्तं ध्वांक्षवाचिना[२८] समस्यते, किन्तु निन्दायां गम्यमानायाम् ।
तीर्थे ध्वांक्ष इव = तीर्थध्वांक्षः (गुरुकुलेषु यः चिरं न वसति सः इत्यर्थः ।)

तीर्थे काक इव = तीर्थकाकः

---

२१. अचतुर...पुरुषायुष...गोष्ठश्वाः - ५.४.७७ इति सूत्रे निपातनात् अच्प्रत्ययः ।
२२. ब्रह्महस्तिभ्यां वर्चसः - ५.४.७८ इति अच्प्रत्ययः ।
२३. पल्यराजभ्यां चेति वक्तव्यम् (वा) इति अच्प्रत्ययः ।
२४. उपज्ञोपक्रमं तदाद्याचिख्यासायाम् - २.४.२१ इति नपुंसकत्वम् ।
२५. छाया बाहुल्ये - २.४.२२ । पूर्वपदबाहुल्ये एव नपुंसकत्वम् । अतः वृक्षस्य छाया = वृक्षच्छाया इत्यत्र न नपुंसकत्वम् ।
२६. सप्तमी शौण्डैः - २.१.४० (शौण्डादिषु प्रसिद्धाः शब्दाः स्वीकृताः ।)
२७. सिद्धशुष्कपक्वबन्धैश्च - २.१.४१
२८. ध्वांक्षेण क्षेपे - २.१.४२

## ४.१.२. कर्मधारयः

समानविभक्तन्तयोरेव[२९] कर्मधारयसमासः भवति इति सामान्य-लक्षणम् । अतः कर्मधारयस्य सर्वेषु भेदेषु इदं सामान्यलक्षणम् अनुवर्तते ।

### ४.१.२.१. विशेषणपूर्वपदः

विशेषणवाचि[३०] सुबन्तं विशेष्यवाचिना सुबन्तेन समस्यते ।

- नीलम् उत्पलम्[a] = नीलोत्पलम्
  दीर्घा रज्जुः = दीर्घरज्जुः
  उन्नतः वृक्षः = उन्नतवृक्षः

अधः प्रदर्शितेषु उदाहरणेषु यानि पूर्वपदानि सन्ति तानि कर्मधारये सदा पूर्वमेव प्रयोक्तव्यानि । यथा - प्रथमः वैयाकरणः इति, वैयाकरणः प्रथम इति वा विवक्षिते प्रथमवैयाकरण इत्येव भवति, न तु वैयाकरणप्रथमः इति ।

---

२९. तत्पुरुषः सामानाधिकरणः कर्मधारयः - १.२.४२

३०. विशेषणं विशेष्येण बहुलम् - २.१.५७

a. जातिशब्दः, गुणशब्दः, क्रियाशब्दः, संज्ञाशब्दश्चेति चतुर्विधः शब्दः अस्ति । १. जातिशब्दाः - वृक्षः, उत्पलम्, इत्यादयः । २. गुणशब्दाः - कुब्जः, शीतम् इत्यादयः । ३. क्रियाशब्दाः - पाचकः, पाठकः, नर्तकः इत्यादयः। ४. संज्ञाशब्दाः - अयोध्या, काशी, देवदत्तः इत्यादयः । गुणक्रियासंज्ञाशब्दसमभिव्याहारे जातिशब्दः विशेष्यसमर्पकः । यथा - दीर्घवृक्षः । पाठकब्राह्मणः । अयोध्यानगरी । गुणशब्दयोः समभिव्याहारे विशेषण-विशेष्यभावस्य नियमः नास्ति । यथा - खञ्जकुब्जः । कुब्जखञ्जः । क्रियाशब्दयोरपि विशेषणविशेष्यभावस्य नियमो नास्ति । यथा-पाठकनर्तकः । नर्तकपाठकः । गुणक्रियाशब्दयोरपि विशेषणविशेष्यभावस्य नियमो नास्ति । यथा - कुब्जपाचकः । पाचककुब्जः । जातिशब्दसमभिव्याहारे संज्ञाशब्दः विशेषणमेव । यथा - कैलासाद्रिः । सामान्यजाति-विशेषजातिशब्दयोः समभिव्याहारे विशेषजातिरेव विशेषणम् । यथा - आम्रवृक्षः । तत्र दीर्घवृक्षादयः विशेषण-पूर्वपदस्य, खञ्जकुब्जः, पाठकनर्तकः, कुब्जपाचकः, इत्यादयः विशेषणोभयपदस्य, कैलासाद्रिः इत्यादयः सम्भावनापूर्वपदस्य च उदाहरणानि इति विवेक्तव्यम् ।

| | |
|---|---|
| एकः पुरुषः[३१] = एकपुरुषः । | जघन्यः श्लोकः = जघन्यश्लोकः । |
| सर्वे देवाः = सर्वदेवाः । | समानः मन्त्रः = समानमन्त्रः । |
| जरन्तः नौयायिकाः = जरन्नैयायिकाः । | मध्यं गृहम् = मध्यगृहम् । |
| जरन् गौः = जरद्गुः । | मध्यमः मार्गः = मध्यममार्गः । |
| पुराणः पुरुषः = पुराणपुरुषः । | वीरः पुरुषः = वीरपुरुषः । |
| नवाः पाठकाः = नवपाठकाः । | सन् वैद्यः = सद्वैद्यः । |
| केवलाः वैयाकरणाः = केवलवैयाकरणाः । | महान् वैयाकरणः = महावैयाकरणः । |
| पूर्वः पुरुषः[३२] = पूर्वपुरुषः । | परमः पुरुषः = परमपुरुषः । |
| अपरः मीमांसकः = अपरमीमांसकः । | उत्तमः पुरुषः = उत्तमपुरुषः । |
| अपरः अर्धः = पश्चार्धः । | उत्कृष्टः वैद्यः = उत्कृष्टवैद्यः । |
| प्रथमः पुरुषः = प्रथमपुरुषः । | सप्त ऋषयः[३३] = सप्तर्षयः । |
| चरमं भाषणम् = चरमभाषणम् । | पञ्च आम्राः = पञ्चाम्राः। |

---

३१. पूर्वकाल-एक-सर्व-जरत्-पुराण-नव-केवलाः समानाधिकरणेन - २.१.४९ । एते शब्दाः सुबन्तेन समस्यन्ते इत्यर्थः । (पूर्वकालेत्यस्योदाहरणम् - पूर्वं स्नातः पश्चादनुलिप्तः = स्नातानुलिप्तः ।)

३२. पूर्व-अपर-प्रथम-चरम-जघन्य-समान-मध्य-मध्यम-वीराश्च - २.१.४८ । एते शब्दाः सुबन्तेन समस्यन्ते इत्यर्थः । अपरस्यार्धे पश्चभावो वक्तव्यः (वा) सन्-महत्-परम-उत्तम-उत्कृष्टाः पूज्यमानैः - २.१.६१, एते शब्दाः पूज्यमानैः समस्यन्ते इत्यर्थः ।

३३. दिक्संख्ये संज्ञायाम् - २.१.५०. दिग्वाची सङ्ख्यावाची च सुबन्तेन समस्यते संज्ञायां गम्यमानायाम् इत्यर्थः ।

संज्ञायां गम्यमानायामेवेति नियमार्थमिदं सूत्रम् । अतः संख्यावाचिना सह समासः संज्ञाभिन्नस्थले न भवति । अतः एव 'षड्भिः मन्त्रैः, 'अष्टभिः श्लोकैः' इत्येव प्राचीनाः व्यवहरन्ति, न तु षण्मन्त्रैः अष्टश्लोकैः इति । तथापि 'नवरसरुचिराम्' 'त्रिलोकनाथेन' 'षोडशपदार्थानाम्' इत्यादीनां प्रयोगदर्शनात् सख्यावाची संज्ञाभिन्नस्थलेऽपि समस्यते । किन्तु अत्र नवसंख्याकाः रसाः, त्र्यवयवकः लोकः, षोडशसंख्याकाः पदार्थाः इति विग्रहः प्रदर्शनीयः, येन मध्यमपदलोपः समासः भवति । तेन च विंशतिजनाः पञ्चविंशतिश्लोकाः इत्यादयः सिद्धाः ।

### ४.१.२.२. विशेषणोत्तरपदः

वैयाकरणः खसूचिः[३४] = वैयाकरणखसूचिः ।
मीमांसकः दुर्दुरूटः = मीमांसकदुर्दुरूटः ।
पुरुषः प्रशस्तः[३५] = पुरुषमचर्चिका ।
पण्डितः प्रशस्तः = पण्डितप्रकाण्डम् ।
गौः प्रशस्ता = गोमतल्लिका । विद्वान् प्रशस्तः = विद्वत्तल्लजः ।

### ४.१.२.३. विशेषणोभयपदः

कृतम् अकृतम्[३६] = कृताकृतम् । कृतम् अपकृतम् = कृतापकृतम् ।
भुक्तम् अभुक्तम् = भुक्ताभुक्तम् । गतं प्रत्यागतम् = गतप्रत्यागतम् ।
पीतम् अपीतम् = पीतापीतम् । यातम् अनुयातम् = यातानुयातम् ।
उदितम् अनुदितम् = उदितानुदितम् ।

### ४.१.२.४. उपमानपूर्वपदः

[३७]उपमानवाचि सुबन्तं सामान्यवचनैः सुबन्तैः समस्यते ।
कुसुममिव कोमलम् = कुसुमकोमलम् ।
वज्रम् इव कठोरम् = वज्रकठोरम् । शैलः इव उन्नतः = शैलोन्नतः ।

### ४.१.२.५. उपमानोत्तरपदः

[३८]उपमेयम् उपमानवचनैः व्याघ्रादिभिः समस्यते । किन्तु साधारणधर्मस्य प्रयोगः न करणीयः । यथा - पुरुषः व्याघ्रः इव = पुरुषव्याघ्रः इति समासो भवति । यदा पुरुषः व्याघ्रः इव शूरः इति वक्तुम् इष्यते तदा पुरुषव्याघ्रः शूरः इति पुरुषव्याघ्रपदयोः समासः न करणीयः । शूरः इति साधारणधर्मस्य प्रयोगात् ।

---

३४. कुत्सितानि कुत्सनैः - २.१.५३ कुत्स्यमानानि कुत्सनैः समस्यन्ते ।
३५. प्रशंसावचनैश्च - २.१.६६ प्रशंसावचनैः जातिः समस्यते ।
३६. क्तेन नञ्विशिष्टेनानञ् - २.१.६० अनञ् क्तान्तं नञ्विशिष्टेन क्तान्तेन समस्यते ।
३७. उपमानानि सामान्यवचनैः - २.१.५५ (सामान्यवचनस्य विवरणं ७ - पृष्ठे अस्ति ।)
३८. उपमितं व्याघ्रादिभिः सामान्याप्रयोगे - २.१.५६ (व्याघ्रादिगणे प्रसिद्धाः शब्दाः - व्याघ्रः, सिंहः, ऋक्षः, ऋषभः, हस्ती, पुण्डरीकः, बलाहकः । व्याघ्रादिः आकृतिगणः ।)

पुरुषः सिंहः इव = पुरुषसिंहः । करः किसलयम् इव = करकिसलयम् ।
पुरुषः ऋषभः इव = पुरुषर्षभः ।
पण्डितः पुण्डरीकः इव = पण्डितपुण्डरीकः । पार्थिवः इन्द्रः इव = पार्थिवेन्द्रः ।
गौः वृन्दारकः इव[३९] = गोवृन्दारकः ।
मुखं पद्मम् इव = मुखपद्मम् । पुरुषः नागः इव = पुरुषनागः ।
मुखं कमलम् इव = मुखकमलम् । कपिः कुञ्जरः इव = कपिकुञ्जरः ।

### ४.१.२.६. अवधारणापूर्वपदः

[४०]विशेषणं विशेष्येण समस्यते । अवधारणार्थं द्योतयितुं विग्रहवाक्ये विशेषणात् परम् एवकारः प्रयुज्यते ।

विद्या एव धनम् = विद्याधनम् । तपः एव धनम् = तपोधनम् ।
गुरुः एव देवः = गुरुदेवः । वेदः एव सम्पत् = वेदसम्पत् ।

### ४.१.२.७. सम्भावनापूर्वपदः

[४०]विशेषणं विशेष्येण समस्यते । अत्र विशेषणं संज्ञाशब्दः भवति । विग्रहवाक्ये विशेषणात् परम् 'इति' इति पदं प्रयुज्यते ।

अयोध्या इति नगरी = अयोध्यानगरी । आम्रः इति वृक्षः = आम्रवृक्षः ।
कैलासः इति अद्रिः = कैलासाद्रिः । दशरथः इति राजा = दशरथराजः ।
हिमालयः इति पर्वतः = हिमालयपर्वतः ।

### ४.१.२८. मध्यमपदलोपः

[४०]विशेषणं विशेष्येण समस्यते । किन्तु अत्र विशेषणं विग्रहावस्थायां सदा समस्तं पदं भवति । [४१]विशेषणीभूते समस्तपदे यदुत्तरपदं तस्योत्तरपदस्य लोपः भवति । मध्यमपदलोपव्यवहारस्तु इत्थम् – विग्रहावस्थायां तु पदत्रयं भवति । यथा – शाकप्रियः पार्थिवः इति । अत्र मध्ये स्थितस्य प्रियशब्दस्य लोपः । अतः 'मध्यमपदलोपः समासः' इति व्यवहारः ।

---

३९. वृन्दारकनागकुञ्जरैः पूज्यमानम् - २.१.६२ (सामान्यधर्मप्रयोगेऽपि एतैः त्रिभिः शब्दैः समासो भवति । यथा - बलवान् कपिकुञ्जरः ।)

४०. विशेषणं विशेष्येण बहुलम् - २.१.५७

४१. शाकपार्थिवादीनां सिद्धये उत्तरपदलोपस्योपसङ्ख्यानम् (वा) ।

शाकप्रियः पार्थिवः = शाकपार्थिवः ।

देवपूजकः ब्राह्मणः = देवब्राह्मणः

द्व्यधिका विंशतिः = द्वाविंशतिः

षोडशसङ्ख्याकाः पदार्थाः = षोडशपदार्थाः

*द्विगुणितं शतम् = द्विशतम् (२०० इत्यर्थ)

द्व्यधिकाः दश = द्वादश

द्व्यधिकं शतम् = द्विशतम् (१०२ इत्यर्थः)

### ४.१.२.९. मयूरव्यंसकादिः

[४२]समासविधायकेन सामान्यनियमेन यत् सिद्धं न भवति तत् मयूरव्यंसकादिगणे पठितम् । 'अविहितलक्षणः तत्पुरुषः मयूरव्यंसकादिषु द्रष्टव्यः' इति काशिकायाम् अभिहितम् ।

मयूरः व्यंसकः = मयूरव्यंसकः । उदक् अवाक् = उच्चावचम् ।
निश्चितं प्रचितम् = निश्चप्रचम् । नास्ति किञ्चन यस्य सः = अकिञ्चनः ।
नास्ति कुतो भयं यस्य सः = अकुतोभयः ।
अन्यो राजा = राजान्तरम् । चिदेव = चिन्मात्रम् ।
अश्नीत पिबत इत्येवं सततं यत्राभिधीयते सा = अश्नीतपिबता ।
पचत भृज्जत इत्येवं सततं यत्राभिधीयते सा = पचतभृज्जता ।
खादत मोदत इत्येवं सततं यत्राभिधीयते सा = खादतमोदता ।
जहि जोडं जहि जोडम् इति आभीक्ष्ण्येन य आह सः = जहिजोडः ।

## ४.१.३. द्विगुसमासः

[४३]सङ्ख्यावाचकं सुबन्तेन समस्यते - i) तद्धितार्थविषये ii) उत्तरपदे परतः, iii) समाहारे वाच्ये वा । अतः द्विगुसमासः त्रिधा भवति - i) तद्धितार्थद्विगुः, ii) उत्तरपदपरद्विगुः, iii) समाहारद्विगुः चेति ।

---

* इदमत्र ज्ञेयम् - द्विशतमित्यस्य अर्थः द्व्युत्तरं शतम् (१०२) इति । 'शतद्वयम्' इत्यर्थे द्विशती इति प्रयोक्तव्यम् । यतः 'द्वयोः शतयोः समाहारः' इति विवक्षिते द्विगुसमासे ईकारान्तेन भाव्यम् । त्रिशती इत्यादयः प्रसिद्धाः शब्दाः खलु । किन्तु 'शतद्वयम्' इत्यार्थे 'द्विशतम्' इति तत्र तत्र प्रयुज्यते । अतः एतादृशस्य अन्वाख्यानं 'द्विगुणितं शतम् द्विशतम्' इत्येवंरीत्या करणीयम् । तेन त्रिशतम्, पञ्चशतम्, अष्टशतम् इत्यादयः सिद्धाः ।, ४१-पृष्ठे टिप्पणी अपि द्रष्टव्या ।

४२. मयूरव्यंसकादयश्च- २.१.७२ (मयूरव्यंसकादयः शब्दाः निपात्यन्ते इति सुत्रार्थः । निपातनं नाम सिद्धप्रक्रियस्य शब्दस्वरूपस्य निर्देशः ।)

४३. तद्धितार्थोत्तरपदसमाहारे च - २.१.५१.

### ४.१.३.१. तद्धितार्थद्विगुः

[४४]षण्णां मातृणाम् अपत्यम् = षाण्मातुरः
द्वयोः मात्रोः अपत्यम् = द्वैमातुरः
पञ्चसु कपालेषु संस्कृतः = पञ्चकपालः (पुरोडाशः)

### ४.१.३.२. उत्तरपदद्विगुः

[४५]पञ्च गावः धनं यस्य सः = पञ्चगवधनः
दश गावः धनं यस्य सः = दशगवधनः
द्वे अहनी प्रिये यस्य सः = द्व्यह्नप्रियः
पञ्च सखायः प्रियाः यस्य सः = पञ्चसखप्रियः

### ४.१.३.३. समाहारद्विगुः

[४६]पञ्चनां गवां समाहारः = पञ्चगवम्[४७]
पञ्चानां पात्राणां समाहारः = पञ्चपात्रम्
त्रयाणां भुवनानां समाहारः = त्रिभुवनम्
चतुर्णां युगानां समाहारः = चतुर्युगम्
सप्तानाम् अह्नां समाहारः = सप्ताहः[४८]

---

४४. ८-पृष्ठे टिप्पणीं पश्यन्तु ।
४५. ८-पृष्ठे टिप्पणीं पश्यन्तु ।
४६. समाहारद्विगुः एकवचनान्तः भवति । (द्विगुरेकवचनम् - २.४.१)
४७.२२- पृष्ठे समासान्तप्रत्ययनियमं पश्यन्तु ।

**समाहारद्विगौ लिङ्गव्यवस्था** - i) स नपुंसकम् - २.४.१७ 'समाहारे द्विगुः द्वन्द्वः च नपुंसकलिङ्गं स्यात्' इत्यर्थः । अतः नपुंसकता सर्वत्र प्राप्ता । ii) किन्तु अहश्शब्दः द्विगौ पुंल्लिङ्गः स्यात् । रात्राह्नाहाः पुंसि - २.४.२१ इति सूत्रम् अत्र प्रमाणम्, iii) अकारान्तशब्दान्तः द्विगुः ईकारान्तस्त्रीलिङ्गः भवति । अत्र 'अकारान्तोत्तरपदो द्विगुः स्त्रियाम् इष्टः' इति वार्तिकं, द्विगोः - ४.१.२१ इति सूत्रं च प्रमाणम् । किन्तु अयं नियमः पात्रादिगणे प्रविष्टाः ये शब्दाः (पात्रम्, भुवनम्, युगम् इत्यादयः) तदन्तस्य विषये नास्ति । 'पात्राद्यन्तस्य न' इति वार्तिकम् अत्र प्रमाणम् । iv) रात्रिशब्देन सह द्विगुसमासे जाते रात्रिशब्दः अकारान्तः भवति । तथापि स्त्रीलिङ्गता नास्ति । किन्तु नपुंसकता एव । 'सङ्ख्यापूर्वं रात्रं क्लीबम्' इति गणसूत्रम् अत्र प्रमाणम् ।
४८. २२- पृष्ठे समासान्तप्रत्ययनियमं पश्यन्तु ।

द्वयोः अह्नोः समाहारः = द्व्यहः
तिसृणां रात्रीणां समाहारः = त्रिरात्रम्[४९]
पञ्चानां रात्रीणां समाहारः = पञ्चरात्रम्
नवानां रात्रीणां समाहारः = नवरात्रम्
त्रयाणां लोकानां समाहारः = त्रिलोकी
पञ्चानां वटाणां समाहारः = पञ्चवटी

## ४.१.४. नञ्प्रभृतयः

### ४.१.४.१. नञ्समासः[५०]

नञ् (न) सुबन्तेन समस्यते ।

न सन्देहः = असन्देहः[५१]
न विघ्नः = अविघ्नः
न अश्वः = अनश्वः
न आगमनम् = अनागमनम्
न विवादः = अविवादः
न पटुः = अपटुः
न उपलब्धिः = अनुपलब्धिः
[५२]न पन्थाः = अपन्थाः / अपथम्

'अविघ्नमस्तु' इत्यादौ 'विघ्नानाम् अभावः' इति विग्रहः । अर्थभावे अव्ययीभावसमासोऽयम् ।

### ४.१.४.२. कुसमासः

[५३]कुशब्दः सुबन्तेन नित्यं समस्ते । अतः अस्वपदविग्रहः ।

---

४९. २१- पृष्ठे समासान्तप्रत्ययनियमं पश्यन्तु ।

५०. नञ् - २.२.६१

५१. १८ - पृष्टे नियमं पश्यन्तु ।

५२. पथो विभाषा - ५.४.७२ इति सूत्रेण विकल्पेन समासान्तप्रत्ययः भवति । प्रत्ययाभावे अपन्थाः । प्रत्यये सति अपथम् । अव्ययात्परः पथश्ब्दः नपुंसकं भवति । 'पथः सङ्ख्याव्ययादे' इति वार्तिकम् अत्र प्रमाणम् ।
इदमत्र ज्ञेयम् - न एकधा = नैकधा, न आन्तरीयकम् = नान्तरीयकम् इत्यादौ 'न' शब्देन समासः, न तु 'नञ्' इति शब्देन । 'नञ्' इति, 'न' इति च अव्ययद्वयम् । द्वयोरप्यर्थः समानः एव । किन्तु नञा समासे नकारस्य (न्) लोपः भवति । नशब्देन समासे लोपो न भवति ।

५३. कुगतिप्रादयः २.२.१८

कुत्सितः पुरुषः = कुपुरुषः / कापुरुषः[५४]
कुत्सितम् अन्नम् = कदन्नम्[५५]    कुत्सितः अश्वः = कदश्वः

### ४.१.४.३. गतिसमासः

गतिसंज्ञायुक्तं शब्दान्तरेण नित्यं समस्यते । गतिर्नाम काचन संज्ञा । केषाञ्चित् शब्दानां पाणिनिना गतिसंज्ञा विहिता । गतिसंज्ञाविधायकानि सूत्राणि बहूनि सन्ति । अतः अत्र तानि न उल्लिख्यन्ते । गतिसमासे सर्वम् अपि पूर्वपदं गतिसंज्ञायुक्तं भवत्येव इति ज्ञेयम् । गतिसमासोऽयं नित्यः । अतः अस्वपदविग्रहः प्रदर्शनीयः ।

अङ्गीकारं कृत्वा = ऊरीकृत्य
अङ्गीकारं कृत्वा = उररीकृत्य
अशुक्लं शुक्लं कृत्वा = शुक्लीकृत्य
पटपटा इति शब्दं कृत्वा = पटपटाकृत्य
खाट् इति शब्दं कृत्वा = खाट्कृत्य
आदरं कृत्वा = सत्कृत्य
अनादरं कृत्वा = असत्कृत्य
परिष्कारं कृत्वा = अलङ्कृत्य
अभिलाषातिशयं निहत्य = मनोहत्य[५६]
पुरस्कारं कृत्वा = पुरस्कृत्य
तिरोधानं प्राप्य = अस्तंगत्य

व्यवहितो भूत्वा = तिरोभूय
हस्तं गृहीत्वा = हस्तेकृत्य (परिणीय)
पाणिं गृहीत्वा = पाणौकृत्य (परिणीय)
तिरस्कृत्वा[५७] = तिरस्कृत्य
उपाजेकृत्वा = उपाजेकृत्य (दुर्बलस्य बलम् आधाय)
साक्षात्कृत्वा = साक्षात्कृत्य (अप्रत्यक्षं प्रत्यक्षं कृत्वा)
उरसिकृत्वा = उरसिकृत्य (अभ्युपगम्य)
मनसिकृत्वा = मनसिकृत्य (निश्चित्य)

---

५४. पुरुषशब्दे परे 'कु' इत्यस्य विकल्पेन 'का' इत्यादेशः भवति । विभाषा पुरुषे - ६.३.१०६)
५५. अजादौ उत्तरपदे 'कद्' इत्यादेशः भवति । (कोः कत्तत्पुरुषेऽचि - ६.३.१०१)
५६. 'मनोहत्य पयः पिबति' इति रमणीयः प्राचीनप्रयोगः । अभिलाषनिवृत्तिपर्यन्तं पयः पिबति इत्यर्थः । अत्र मनःशब्दः अभिलाषातिशये वर्तते ।
५७. तिरस्कृत्य, उपाजेकृत्य, साक्षात्कृत्य, उरसिकृत्य, मनसिकृत्य इत्येतेषु स्वपदविग्रहःदर्शितः । एषु विकल्पेन गतिसंज्ञाविधानात् उभयथापि प्रयोगः साधुः । तिरस्कृत्वा इत्यादिकं व्यस्तं, तिरस्कृत्य इत्यादिकं समस्तम् इति ज्ञेयम् ।

जीविकामिव कृत्वा = जीविकाकृत्य (जीविकाम् इव अवश्यं कृत्वा)
उपनिषदमिव कृत्वा = उपनिषत्कृत्य (उपनिषदमिव रहसि ग्राह्यत्वेन कृत्वा)

### ४.१.४.४. प्रादिसमासः

[५७]प्रादयः शब्दान्तरेण नित्यं समास्यन्ते । प्रादयः = प्र, परा, अप, सम्, इत्यादयः द्वाविंशतिः । नित्यसमासत्वात् अस्वपदविग्रहः ।

[५८]शोभनः पुरुषः = सुपुरुषः
शोभनः जनः = सुजनः
दुराचारः पुरुषः = दुष्पुरुषः
प्र[६०] = गतः आचार्यः = प्राचार्यः
[६१]अति = क्रान्तं मालाम् = अतिमालः
अभि = गतः मुखम् = अभिमुखः
प्रति = गतः अक्षम् (इन्द्रियम्) = प्रत्यक्षः
अति = क्रान्ता श्वानम् = *अतिश्वी (सेवा)
[६२]अव = क्रुष्टः कोकिलया = अवकोकिलः (कोकिलया आहूतः)
[६३]परि = ग्लानः अध्ययनाय = पर्यध्ययनः (परिग्लानः)
[६४]निर् = क्रान्तः कौशाम्ब्याः = निष्कौशाम्बिः
उत् = क्रान्तः कुलात् = उत्कुलः

---

५८. कुगतिप्रादयः - २.२.१८.
५९. प्रादयो गत्याद्यर्थे प्रथमया (वा)
६०. 'प्र' इत्यस्य विवरणं 'गतः' इति । अतः न स्वपदेन विग्रहः । 'अभिगतः' इत्यादौ अपि एवम् एव ।
६१. अत्यादयः क्रान्ताद्यर्थे द्वितीयया (वा)
६२. अवादयः क्रुष्टाद्यर्थे तृतीयया (वा)
६३. पर्यादयः ग्लानाद्यर्थे चतुर्थ्या (वा)
६४. निरादयः क्रान्ताद्यर्थे पञ्चम्या (वा)
* अतेः शुनः - ५.८.९६ 'अति' इति अव्ययात् परो यः 'श्वन्'शब्दः तदन्तात् तत्पुरुषात् टच् स्यात् । स्त्रीलिङ्गे टित्वात् ङीप् ।

### ४.१.४.५. उपपदसमासः

[६५]उपपदं सुबन्तं शब्दान्तरेण नित्यं समस्यते । उपपदं नाम काचन संज्ञा। उपपदसमासे सर्वमपि पूर्वपदं उपपदसंज्ञायुक्तं भवति । नित्यसमासत्वात् अस्वपदविग्रहः ।

[६६]कुम्भं करोति इति = कुम्भकारः
निशां करोति इति = निशाकरः
तुन्दं परिमार्ष्टि इति = तुन्दपरिमृजः
उष्णं भुङ्क्ते इति = उष्णभोजी
सोमेन इष्टवान् इति = सोमयाजी
शास्त्रं करोति इति = शास्त्रकृत् / शास्त्रकारः
भाष्यं करोति इति = भाष्यकृत् / भाष्यकारः
[६७]प्रियं वदति इति = प्रियंवदः
भयं करोति इति = भयङ्करः
वशं वदति इति = वशंवदः
अभयं करोति इति = अभयङ्करः
पण्डितम् (आत्मानम्) मन्यते इति = पण्डितंमन्यः/ पण्डितंमानी
[६८]शय्यायाः उत्थायम् = शय्योत्थायम्[६९]
उच्चैः कृत्वा = उच्चैःकृत्य
विना कृत्वा = विनाकृत्य
नानाकृत्वा = नानाकृत्य
एकधा भूत्वा = एकधाभूय
तूष्णीं भूत्वा = तूष्णीम्भूय

---

६५. उपपदमतिङ् - २.२.१७.

६६. कुम्भं करोति इति अस्वपदविग्रहः, उपपदसमासस्य नित्यत्वात् । अतः तिङन्तेन समासः इति न मन्तव्यम् ।

६७. प्रियंवदः इत्यादौ मुमागमः, न तु द्वितीयायाः अलुक् ।

६८. शय्यायाः उत्थायम् इत्यारभ्य तूष्णीं भूत्वा पर्यन्तं स्वपदविग्रहः दर्शितः । तेषां विकल्पेन उपपदसमासस्य विधानात् । अतः उच्चैः कृत्वा इत्यादिकं व्यस्तम्, उच्चैःकृत्य इत्यादिकं समस्तमिति ज्ञेयम् ।

६९. शय्योत्थायं धावति इति प्राचीनः प्रयोगः । 'एवं नाम त्वरते यदवश्यकर्तव्यमपि नापेक्षते, शय्योत्थानमात्रम् अपेक्षते' इति अस्य वाक्यस्य अर्थः ।

## ४.२. बहुव्रीहिः

अन्यस्य पदस्य अर्थे वर्तमानम् अनेकं सुबन्तं समस्यते । लिङ्गत्रयेऽपि बहुव्रीहिः सम्भवति ।

### ४.२.१. सामान्यबहुव्रीहिः (समानाधिकरणबहुव्रीहिः)

बहुव्रीहिः सामान्यः विशेषश्चेति द्विधा इति पूर्वम् उक्तम् । समानाधिकरणबहुव्रीहिरेव अत्र सामान्यशब्देन व्यवहृतः । सामान्यः षोढा इत्युक्तम् । तेषां षण्णामपि पृथक् पृथक् उदाहरणानि अत्र न उल्लिख्यन्ते । षट्सु भेदेषु कुत्र अन्तर्भवतीति स्वयम् ऊहनीयम् ।

ऊढः रथः येन सः = ऊढरथः आरूढं यानं येन सः = आरूढयानः
कृतं भोजनं येन सः = कृतभोजनः प्रविष्टा शाला येन सः = प्रविष्टशालः
अधीतं काव्यं यया सा = अधीतकाव्या
धृतानि पुष्पाणि यया सा = धृतपुष्पा
उद्धृतः ओदनः यस्याः सा = उद्धृतौदना (स्थाली)
पतितानि पर्णानि यस्मात् सः = पतितपर्णः (वृक्षः)
गलितानि पुष्पाणि यस्याः सा = गलितपुष्पा (लता)
चित्राः गावः यस्य सः = चित्रगुः
[१]रूपवती भार्या यस्य सः = रूपवद्भार्यः
[२]गङ्गा भार्या यस्य सः = गङ्गाभार्यः सर्वा प्रिया यस्य सः = सर्वप्रियः
[३]पाचिका भार्या यस्य सः = पाचिकाभार्यः
वैयाकरणी भार्या यस्य सः = वैयाकरणभार्यः
[४]सुकेशी भार्या यस्य सः = सुकेशीभार्यः
पट्वी भार्या यस्य सः = पटुभार्यः

---

१. पूर्वपदे पुंवद्भावः । १९ - पृष्ठे नियमं पश्यन्तु ।
२. गङ्गाशब्दःभाषितपुंस्कः न । अतः न पुवंद्भावः ।
३. न कोपधायाः ७.३.३७ – कोपधायाः स्त्रिया न पुंवत् ।
४. स्वङ्गाच्चेतः ६.३.४० - स्वाङ्गाद् य ईकारः तदन्ता स्त्री न पुंवत् ।

दृढा भक्तिः यस्य सः = दृढाभक्तिः*
विशाले अक्षिणी यस्य सः = विशालाक्षः
निर्गतः वृत्तेः = निवृत्तिः, निवृत्तिः धर्मः यस्य सः = निवृत्तिधर्मा
वीराः पुरुषाः यस्मिन् सः = वीरपुरुषः (ग्रामः)

### ४.२.२. व्यधिकरणबहुव्रीहिः

समानविभक्त्यन्तयोः समासे समानाधिकरणबहुव्रीहिः इति उच्यते। विभिन्नविभक्त्यन्तयोः समासे व्यधिकरणबहुव्रीहिः इति कथ्यते।

गदा पाणौ यस्य सः = गदापाणिः
गडुः कण्ठे यस्य सः = गडुकण्ठः (गडुः = ग्रीवादिगतः दुर्मांसागोलः)
भाले चन्द्रः यस्य सः = भालचन्द्रः
चन्द्रः मौलौ यस्य सः = चन्द्रमौलिः
विषं कण्ठे यस्य सः = विषकण्ठः
[५]कण्ठे कालः यस्य सः = कण्ठेकालः

### ४.२.३. सङ्ख्योत्तरपदः

[६]अव्यय-आसन्न-अदूर-अधिकशब्दाः सङ्ख्येयार्थकेन सङ्ख्याशब्देन समस्यन्ते।

दशानां समीपे ये सन्ति ते = उपदशाः[७]
विंशतेः समीपे ये सन्ति ते = उपविंशाः
त्रिंशतः समीपे ये सन्ति ते = उपत्रिंशाः
चत्वारिंशतः समीपे ये सन्ति ते = उपचत्वारिंशाः
पञ्चाशतः समीपे ये सन्ति ते = उपपञ्चाशाः
षष्टेः समीपे ये सन्ति ते = उपषष्टाः
सप्ततेः समीपे ये सन्ति ते = उपसप्तताः
अशीतेः समीपे ये सन्ति ते = उपाशीताः
नवतेः समीपे ये सन्ति ते = उपनवताः

---

* अत्र न पुंवद्भावः। दृढभक्तिः इति तु सामान्ये नपुंसकमाश्रित्य दृढं भक्तिः यस्य सः इति व्युत्पाद्यः। ५. अलुक्समासः अयम्।

६. सङ्ख्याव्ययासन्नादूराधिकसङ्ख्याः* सङ्ख्येये-२.२.२५ (*सङ्ख्योभयपदे उदाहरणं द्रष्टव्यम्।)

७. सङ्ख्योत्तरपदसमासे सर्वे बहुवचनान्ताः भवन्ति।

शतस्य समीपे ये सन्ति ते = उपशताः
पञ्चविंशतेः आसन्नाः = आसन्नपञ्चविंशाः
त्रिंशतः अदूराः = अदूरत्रिंशाः
पञ्चाशतः अधिकाः = अधिकपञ्चाशाः
सहस्रात् अधिकाः = अधिकसहस्राः*

### ४.२.४. सङ्ख्योभयपदः

सङ्ख्येयार्थकं सङ्ख्येयपदं सङ्ख्येयार्थकेन सङ्ख्यापदेन समस्यते ।

द्वौ वा त्रयः वा = द्वित्राः
त्रयः वा चत्वारः वा = त्रिचतुराः
पञ्च वा षड् वा = पञ्चषाः

### ४.२.५. सहपूर्वपदः

[८]'सह' इत्येतत् तृतीयान्तेन समस्यते ।

पुत्रेण सह वर्तते इति = सपुत्रः/सहपुत्रः[९]
कुटुम्बेन सह वर्तते इति = सकुटुम्बः/सहकुटुम्बः
कर्मणा सह वर्तते इति = सकर्मकः
लोम्ना सह वर्तते इति = सलोमकः

### ४.२.६. व्यतिहारलक्षणः[१०]

केशेषु केशेषु गृहीत्वा इदं युद्धं प्रवृत्तम् = केशाकेशि[११]
दण्डैः दण्डैः प्रहृत्य इदं युद्धं प्रवृत्तम् = दण्डादण्डि
मुष्टिभिः मुष्टिभिः प्रहृत्य इदं युद्धं प्रवृत्तम् = मुष्टीमुष्टि
बाहौ बाहौ गृहीत्वा इदं युद्धं प्रवृत्तम् = बाहूबाहवि

---

* 'उपदशाः' इत्यादिषु डच् प्रत्ययो भवति । तेन टेर्लोपः । यद्यन्ते 'विंशति' भवति, तदा 'ति' इत्यस्यैव लोपः ।

८. तेन सहेति तुल्ययोगे - २.२.२८

९. वोपसर्जनस्य - ६.३.७२ बहुव्रीहेः अवयवस्य सहस्य सः स्यात् विकल्पेन ।

१०. तत्र तेनेदमिति सरूपे - २.२.२७ सप्तम्यन्ते ग्रहणविषये सरूपे पदे, तृतीयान्ते च प्रहरणविषये इदं युद्धं प्रवृत्तम् इत्यर्थे समस्यते कर्मव्यतिहारे द्योत्ये ।

११. व्यतिहारलक्षणस्य सर्वाणि उदाहरणानि अव्ययानि भवन्ति ।

### ४.२.७. दिगन्तराललक्षणः

दिङ्नामानि[१२] सुबन्तानि अन्तराले वाच्ये परस्परं समस्यन्ते । (दिशां नामानि = दिङ्नामानि ।)

दक्षिणस्याः पूर्वस्याश्च दिशो यदन्तरालम् = दक्षिणपूर्वा (आग्नेयी दिक्)
पूर्वस्याः उत्तरस्याः च दिशो यदन्तरालम् = पूर्वोत्तरा (ऐशानी दिक्)
उत्तरस्याः पश्चिमायाः च दिशो यदन्तरालम् = उत्तरपश्चिमा (वायवी दिक्)
पश्चिमायाः दक्षिणस्याः च दिशो यदन्तरालम् = पश्चिमदक्षिणा (नैर्ऋती दिक्)

### ४.२.८. नञ्बहुव्रीहिः

[१३]'अविद्यमानम्' इति पदं सुबन्तेन समस्यते । समासे जाते विद्यमानपदस्य लोपो भवति ।

अविद्यमानः पुत्रः यस्य सः = अपुत्रः
अविद्यमानम् अपत्यं यस्य सः = अनपत्यः[१४]
अविद्यमाना पुत्री यस्य सः = अपुत्रीकः[१५]
अविद्यमानः प्रजा यस्य सः = अप्रजाः[१६] (सकारान्तः शब्दः)
अविद्यमाना मेधा यस्य सः = अमेधाः[१६] (सकारान्तः शब्दः)

### ४.२.९. प्रादिबहुव्रीहिः[१७]

प्रादिभ्यः परं धातुजप्रकृतिकप्रथमान्तं अन्येन प्रथमान्तेन समस्यते । परस्य धातुजस्य लोपश्च भवति ।

निर्गता दया यस्मात् सः = निर्दयः    दुर्गता मेधा यस्य सः = दर्मेधाः[१६]
निर्गतम् अपत्यं यस्मात् सः = निरपत्यः शोभना मेधा यस्य सः = सुमेधाः[१६]
निर्गता करुणा यस्मात् सः = निष्करुणः

---

१२. दिङ्नामान्यन्तराले - २.२.२६

१३. नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः (वा) - नञः परेषाम् अस्त्यर्थवाचिनां समासः इति वार्तिकार्थः । तथापि 'अविद्यमानम्' इति पदेनैव प्रायः विग्रहः उच्यते इति उपरि अविद्यमानम् इति लिखितम् ।

१४. १८- पृष्ठं पश्यन्तु,

१५. २५ - पृष्ठं पश्यन्तु ।

१६. नित्यमसिच् प्रजामेधयोः - ५.४.१२२ - नञ्, दुर्, सु इत्येतेभ्यः पराभ्यां प्रजा-मेधाशब्दाभ्याम् असिच्प्रत्ययः भवति ।

१७. प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः (वा)

उद्गतः गन्धः यस्य सः = उद्गन्धिः[१७]
शोभनः गन्धः यस्य सः = सुगन्धिः[१७]
शोभनौ पादौ यस्य सः = सुपाद्[१८]
शोभनाः दन्ताः यस्याः सा = सुदती[१९]
शोभनाः दन्ताः यस्य सः = सुदन्[१९]
उन्नता नासिका यस्य सः = उन्नसः[२०]

### ४.२.१०. उपमानपूर्वपदः

i) [२१]सप्तम्यन्तसहितम् उपमानसहितञ्च समस्तपदं पदान्तरेण समस्यते । अस्मिन् समासे विग्रहावस्थायां पूर्वपदं समस्तम् एव भवति । तस्मिन् पदे यत् उत्तरपदं तस्य लोपश्च भवति ।

ii) [२२]केवलम् उपमानवाचकम् अपि अन्येन सुबन्तेन समस्यते ।

कण्ठेस्थः कालः यस्य सः = कण्ठेकालः
गजाननम् इव आननं यस्य सः = गजाननः
उष्ट्रमुखम् इव मुखं यस्यः सः = उष्ट्रमुखः
खरमुखम् इव मुखं यस्य सः = खरमुखः
पुण्डरीके इव अक्षिणी यस्य सः = पुण्डरीकाक्षः[२३]
जलजे इव अक्षिणी यस्याः सा = जलजाक्षी[२३]
कुण्डम् इव ऊधः यस्याः सा = कुण्डोघ्नी (गौः)[२४]
घटः इव ऊधः यस्याः सा = घटोघ्नी (गौः)[२४]

---

१७. २४-पृष्ठं पश्यन्तु । १८. २५-पृष्ठं पश्यन्तु ।

१९. वयसि दन्तस्य दतृ - ५.४.१४१ - सङ्ख्या-सु-पूर्वस्य दन्तस्य दतृ (दत्) इत्यादेशः भवति वयसि गम्यमाने ।

२०. उपसर्गाच्च - ५.४.११९ - प्रादेर्यो नासिकाशब्दः तदन्ताद् बहुव्रीहेः अच्, नासिकायाः नसादेशश्च ।

२१. सप्तम्युपमानपूर्वपदस्योत्तरपदलोपश्च (वा)

२२. अनेकमन्यपदार्थे - २.२.२४

२३. बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच् - ५.४.११३. - स्वाङ्गवाचि-सक्थि-अक्षि-अन्तात् बहुव्रीहेः षच्(अ)प्रत्ययो भवति । [ स्त्रीलिङ्गे षित्वात् ङीष् (इ) ]

२४. ऊधसोऽनङ् - ५.४.१३१ ऊधोन्तस्य बहुव्रीहेः 'अनङ्' - आदेशः भवति स्त्रीलिङ्गे । बहुव्रीहेरूधसो ङीष् - ४.१.२५ इति ङीष् (ई) ।

## ४.३. द्वन्द्वसमासः

[२५]इतरेतरयोगे समाहारे च अर्थे वर्तमानम् अनेकं सुबन्तं समस्यते । (इतरेतरयोगो नाम = मिलितानाम् एकस्मिन् क्रियापदेऽन्वयः । समाहारो नाम = समूहः ।) अतः द्वन्द्वः इतरेतरः समाहारश्चेति द्विधा । इतरेतरः द्वयोरपि पदयोः भवति, बहूनामपि पदानां भवति । समाहारेऽपि तथैव । किन्तु समाहारद्वन्द्वः क्वचिन्नित्यः ।

### ४.३.१. इतरेतरद्वन्द्वः

| | | |
|---|---|---|
| [२६]हरिश्च हरश्च | = | हरिहरौ |
| [२७]हरिश्च गुरुश्च हरश्च | = | हरिहरगुरवः / हरिगुरुहराः |
| [२८]ईशश्च कृष्णश्च | = | ईशकृष्णौ |
| [२९]अश्वश्च रथश्च इन्द्रश्च | = | अश्वरथेन्द्राः/ इन्द्राश्वरथाः |
| [३०]इन्द्रश्च अग्निश्च | = | इन्द्राग्नी |
| [३१]शिवश्च केशवश्च | = | शिवकेशवौ |
| धवश्च खदिरश्च | = | धवखदिरौ |
| ग्रीष्मश्च वसन्तश्च | = | ग्रीष्मवसन्तौ |
| [३२]हेमन्तश्च शिशिरश्च वसन्तश्च | = | हेमन्तशिशिरवसन्ताः |
| कृत्तिका च रोहिणी च | = | कृत्तिकारोहिण्यौ |
| [३३]माता च पिता च | = | मातापितरौ |
| युधिष्ठिरश्च अर्जुनश्च | = | युधिष्ठिरार्जुनौ |

२५. चार्थे द्वन्द्वः - २.२.२९

२६. द्वन्द्वे घि - २.२.३२ ह्रस्वेकारान्तं ह्रस्वोकारान्तं च पूर्वं प्रयोज्यम् । किन्तु सखिशब्दविषये नायं नियमः ।

२७. अनेकप्राप्तौ एकत्र नियमोऽनियमः शेषे (वा)

२८. अजाद्यदन्तम् - २.२.३३ अजादित्वे सति अदन्तं यत् तत्पूर्वं प्रयोज्यम् ।

२९. बहुष्वनियमः (वा)

३०. घ्यन्तादजाद्यदन्तं विप्रतिषेधेन (वा) 'द्वन्द्वे घि इति नियमस्य 'अजाद्यदन्तम्' इति नियमस्य च एकत्र प्राप्तौ अजाद्यदन्तमेव प्रवर्तते ।

३१. अल्पाच्तरम् - २.२.३४ - अल्पसङ्ख्याकाच्पदं पूर्वं प्रयोज्यम् ।

३२. ऋतुनक्षत्राणां समाक्षरणामानुपूर्व्येण (वा) - पूर्वं प्रयोज्यमित्यर्थः ।

३३. अभ्यर्हितञ्च (वा) 'श्रेष्ठः पूर्वं प्रयोज्यः' इत्यर्थः ।

### ४.३.२. समाहारद्वन्द्वः

[३४]संज्ञाश्च परिभाषाश्च एतासां समाहारः = संज्ञापरिभाषम् ।
घटश्च पटश्च अनयोः समाहारः = घटपटम्

### ४.३.३. नित्यसमाहारद्वन्द्वः

| | | |
|---|---|---|
| [३५]पाणी च पादौ च एतेषां समाहारः | = | पाणिपादम् |
| मार्दङ्गिकाश्च पाणविकाश्च एतेषां समाहारः | = | मार्दङ्गिकपाणविकम् |
| [३६]रथिकाश्च अश्वारोहाश्च एतेषां समाहारः | = | रथिकाश्वारोहम् |
| [३७]धानाश्च शष्कुल्यश्च एतासां समाहारः | = | धानाशष्कुलि |
| [३८]यूकाश्च लिक्षाश्च एतासां समाहारः | = | यूकालिक्षम् |
| [३९]अहिश्च नकुलश्च अनयोः समाहारः | = | अहिनकुलम् |
| गौश्च व्याघ्रश्च अनयोः समाहारः | = | गोव्याघ्रम् |
| काकश्च उलूकश्च अनयोः समाहारः | = | काकोलूकम् |
| [४०]गावश्च अश्वाश्च एतेषां समाहारः | = | गवाश्वम् |
| पुत्रश्च पौत्रश्च अनयोः समाहारः | = | पुत्रपौत्रम् |
| दासी च दासश्च अनयोः समाहारः | = | दासीदासम् |

---

३४. संज्ञाश्च परिभाषाश्च – संज्ञापरिभाषाः इति इतरेतरोऽपि भवति । एवं घटपटौ ।

३५., ३६. द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम् २.४.२ - प्राण्यङ्गानां तूर्याङ्गानां सेनाङ्गानाश्च द्वन्द्वः नित्यम् एकवत्स्यात् ।

३७. जातिरप्राणिनाम् २.४.६ - प्राणिवर्ज्यद्रव्यजातिवाचिनां द्वन्द्वः नित्यम् एकवत्स्यात् ।

३८. क्षुद्रजन्तवः- २.४.८ - क्षुद्रजन्तूनां समाहारे द्वन्द्वः नित्यमेकवत्स्यात् । (आ नकुलात् क्षुद्रजन्तवः ।)

३९. येषां च विरोधः शाश्वतिकः २.५.९ - समाहारे द्वन्द्वः नित्यमेकवत्स्यात् ।

४०. गवाश्वप्रभृतीनि च - २.४.११ - यथोच्यारितानि साधूनि स्युः ।

## ४.४. अव्ययीभावः

[४१]विभक्त्यर्थादिषु वर्तमानम् अव्ययं सुबन्तेन समस्यते । एषः अव्ययीभावः त्रिधा - i) अव्ययपूर्वपदः, ii) अव्ययोत्तरपदः, iii) अव्ययोत्तरपदरहितश्चेति । अत्र 'अधिहरि' इत्यारभ्य यावन्नामम् इति पर्यन्तं नित्यसमासः । शाकप्रति इत्यपि नित्यसमासः। अतः एषु अस्वपदविग्रहः प्रदर्शितः । अन्ये तु विकल्पेन भवन्ति ।

### ४.४.१. अव्ययपूर्वपदः

१. विभक्त्यर्थे - हरौ इति = अधिहरि
२. समीपार्थे - कृष्णस्य समीपम् = उपकृष्णम्
३. समृद्ध्यर्थे - मद्राणां समृद्धिः = सुमद्रम्
४. व्यृद्ध्यर्थे - यवनानां व्यृद्धिः = दुर्यवनम् (व्यृद्धिः = विगता ऋद्धिः)
५. अर्थाभावार्थे - मक्षिकाणाम् अभावः = निर्मक्षिकम्
६. अत्ययार्थे - हिमस्य अत्ययः = अतिहिमम् (अत्ययः = ध्वंसः)
७. असम्प्रत्यर्थे - निद्रा सम्प्रति न युज्यते इति = अतिनिद्रम्
८. शब्दप्रादुर्भावार्थे - हरिशब्दस्य प्रकाशः = इतिहरि
९. पश्चादार्थे = विष्णोः पश्चात् = अनुविष्णु
१०. यथार्थश्चतुर्धा -
 i) योग्यतार्थे - रूपस्य योग्यम् = अनुरूपम्
 ii) वीप्सार्थे[४२] - अर्थम् अर्थं प्रति = प्रत्यर्थम्
 iii) पदार्थानतिवृत्त्यर्थे - शक्तिम् अनतिक्रम्य = यथाशक्ति
 iv) सादृश्यार्थे - हरेः सादृश्यम् = सहरि
११. आनुपूर्व्यार्थे - ज्येष्ठस्य आनुपूर्व्येण = अनुज्येष्ठम्
१२. यौगपद्यार्थे - चक्रेण युगपत् = सचक्रम्
१३. सादृश्यार्थे[४३] - सख्या सदृशः = ससखि

---

४१. अव्ययं विभक्ति-समीप-समृद्धि-अर्थाभाव-अत्यय-असम्प्रति-शब्दप्रादुर्भाव-पश्चाद्-यथा-आनुपूर्व्य-यौगपद्य-सादृश्य-सम्पत्ति-साकल्य-अन्तवचनेषु -२.१.६.

४२. स्वपदविग्रहोऽयम् ।

४३. अत्र 'सदृश' इत्यर्थः विवक्षितः ।

१४. सम्पत्त्यर्थे[४४] - क्षत्राणां सम्पत्तिः = सक्षत्रम्
१५. साकल्यार्थे - तृणमपि अपरित्यज्य = सतृणम् (अत्ति)
१६. अन्तार्थे - अग्निग्रन्थपर्यन्तम् (अधीते) = साग्नि
१७. अवधारणार्थे[४५] - यावन्ति नामानि (तावन्तोऽच्युतप्रणामाः) = यावन्नामम् ।
१८. मर्यादार्थे[४६] - आ हिमालयात् = आहिमालयम् (चीनादेशः) (मर्यादा = तेन विना)
१९. अभिविध्यर्थे - आ हिमालयात् = आहिमालयम् (भारतदेशः) (अभिविधिः = तेन सह)
२०. आभिमुख्यार्थे[४७] - अग्निं प्रति = प्रत्यग्नि

### ४.४.२. अव्ययोत्तरपदः अव्ययीभावः

२१. मात्रार्थे[४८] - शाकस्य लेशः = शाकप्रति

### ४.४.३. अव्ययपदरहितः अव्ययीभावः

२२. तिष्ठद्गुप्रभृतयः[४९] - तिष्ठन्ति गावः यस्मिन् काले = तिष्ठद्गु
आयत्यः गावः यस्मिन् काले = आयतीगवम्
२३. पारेशब्दयुक्तः - [५०]गङ्गायाः पारे = पारेगङ्गम्
२४. मध्येशब्दयुक्तः - समुद्रस्य मध्ये = मध्येसमुद्रम् ।

---

४४. अनुरूपः आत्मभावः सम्पत्तिः । ऋद्धेः आधिक्यं समृद्धिः । अतः सम्पत्ति-समृद्ध्योः अत्र न पर्यायार्थता ।
४५. यावदवधारणे - २.१.८ - इयत्ता परिच्छेदे गम्ये यावद् इत्ययं समस्यते ।
४६. आङ्मर्यादाभिविध्योः - २.१.१३ - एतयोराङ् पञ्चम्यन्तेन वा समस्यते ।
४७. लक्षणेनाभिप्रती आभिमुख्ये - २.१.१४ - आभिमुख्यद्योतकौ अभिप्रती चिह्नवाचिना सह वा समस्येते ।
४८. सुप्प्रतिनामात्रार्थे - २.१.९ - लेशार्थे विद्यमानेन प्रतिना सुबन्तं समस्यते ।
४९. तिष्ठद्गुप्रभृतीनि च - २.१.१७ - एतानि निपात्यन्ते ।
५०. पारे मध्ये षष्ठ्या वा - २.२.१८ - पारमध्यशब्दौ षष्ठ्यन्तेन सह वा समस्येते ।

* * * *

# ५. इदमवधेयम्

## ५.१. परस्परान्वितयोः एव समासः । किन्तु ....

परस्परान्वितयोः पदयोः समासः भवति । किन्तु परस्परान्वयोऽस्तीति सर्वत्र समासो न भवति ।

**यथा** - ग्रामं गतवान् । अत्र परस्परान्वयः अस्ति । तथापि समासो न भवति । ग्रामगतवान् इति असाधुरेव । समासविधायकस्य सूत्रस्य अभावः अत्र कारणम् । अतः एकैकस्यापि समासस्य समासविधायकं सूत्रं भवत्येवेति ज्ञेयम् ।

## ५.२. 'यत्र यत्र विग्रहः तत्र तत्र समासः' इति न ।

यत्र यत्र विग्रहः वक्तुं शक्यते तत्र तत्र समासो भवति इति न मन्तव्यम् । यथा - राष्ट्रस्य अयं = राष्ट्रियः । अत्र राष्ट्रस्य अयमिति विग्रहः । राष्ट्रिय इति तु तद्धितवृत्तिः । अत एव वृत्त्यर्थावबोधकं वाक्यं विग्रहः इत्युक्तं, न तु समासार्थवबोधकं वाक्यं विग्रहः इति ।

## ५.३. कर्मधारयः द्विगुश्च तत्पुरुषभेदौ एव ।

तत्पुरुषः, द्वन्द्वः, अव्ययीभावः, बहुव्रीहिः चेति समासः चतुर्धा इत्येव शास्त्रीयः क्रमः । कर्मधारयः द्विगुः च तत्पुरुषे एव अन्तर्भवतः ।

## ५.४. 'यत्र यत्र पूर्वपदं सङ्ख्या तत्र तत्र द्विगुः' इति न ।

सङ्ख्यापूर्वः द्विगुः । किन्तु सङ्ख्यापूर्वकः समासः सर्वोऽपि न द्विगुः ।
**यथा** - पञ्चपुत्रः पाण्डुः । एषः बहुव्रीहिः । अनेकवद्भावी द्विगुरिति नास्ति । सप्तर्षय इति तु कर्मधारयः ।

## ५.५. सुबन्तयोरेव समासः ।

कुम्भं करोति इत्यादौ उपपदसमासस्य विग्रहे तिङन्तं श्रूयते, न तु समासे । अतः सुबन्ततिङन्तयोः न समासः ।

**५.६. प्रथमान्तेन प्रथमं विग्रहः ।**

कूपपतितेन आक्रुश्यते । कूपं पतितः = कूपपतितः । तेन कूपपतितेन । इत्येवं विग्रहः प्रदर्शनीयः, न तु कूपं पतितेन = कूपपतितेनेति । समासे कृते प्रथमान्तेन प्रथममुच्चारणीयम् । अनन्तरम् इष्टा विभक्तिः योजनीया । सर्वत्र समासे एषः क्रमः ।

**५.७. कर्मधारये विग्रहः द्विप्रकारकः ।**

नीलः मेघः = नीलमेघः, नीलश्चासौ मेघश्च = नीलमेघः - इति उभयथापि विग्रहः प्रदर्श्यते । अत्र प्रथमः प्रकारः आदृतः ।

**५.८. अव्ययीभावे प्रायः विभक्तिश्रवाणं न ।**

अव्ययीभावसमासे (अकारान्तम्, टच्प्रत्ययान्तं च विहाय) यथाशक्ति, प्रतिवधु, आकन्याकुमारि, प्रतिकार्यकर्तृ - इत्यादौ विभक्तेः श्रवणं न भवति । अतः यथाशक्तिः इति, यथाशक्तिम् इति वा न प्रयोक्तव्यम् ।

**५.९. विधायकसूत्रम् अस्ति चेदेव समासः ।**

गुरवे दक्षिणा = गुरुदक्षिणा इति विग्रहः न प्रदर्शनीयः । गुरोः दक्षिणा = गुरुदक्षिणा इति षष्ठीतत्पुरुषः एव । बलि-हित-सुख-रक्षित-शब्दैः सहैव चतुर्थ्यन्तं समस्यते, नान्यैः शब्दैः । (किन्तु कुण्डलाय हिरण्यं = कुण्डलहिरण्यम् इत्यादौ प्रकृतिविकृतिभावे, बालकाय अयं = बालकार्थः इत्यादौ अर्थशब्देन च समासः भवति ।)

**५.१०. एकशेषः न समासः ।**

(माता च पिता च) = पितरौ, (भ्राता च स्वसा च) = भ्रातरौ इत्यादौ कः समासः इति प्रश्नः नोचितः । यतः एकशेषः न समासः, अपि तु पृथक् वृत्तिरेव । किन्तु विग्रहः कथमिति प्रश्नः युक्तः एव । वृत्त्यर्थावबोधकं वाक्यं खलु विग्रहः ।

## ५.११. क्रियाविशेषणस्थले.....

'निर्दयं कथयति' इत्यादौ निर्दयम् इति क्रियाविशेषणम् । अस्य विग्रहः व्याख्यानादिषु इत्थं प्रदर्श्यते । यथा - निर्गता दया यस्मिन् कर्मणि तद्यथा भवति तथा = निर्दयम् इति । एतादृशं बहुव्रीहावेव अन्तर्भवति ।

## ५.१२. एकया वृत्त्या इष्टार्थे सिद्धे वृत्तिद्वयस्य कल्पनम्....

'**लक्ष्मीनारायणस्वरूपौ** वधूवरौ' इति '**लक्ष्मीनारायणस्वरूपिणौ** वधूवरौ' इति च प्रयुज्येते । अनयोर्द्वयोरपि साधुत्वम् अस्ति ।

यथा - i) लक्ष्मीनारायणयोः स्वरूपम् इव स्वरूपं ययोः तौ लक्ष्मीनारायणस्वरूपौ इति प्रथमवाक्ये बहुव्रीहिः ।

ii) लक्ष्मीनारायणयोः स्वरूपं = लक्ष्मीनारायणस्वरूपम् । लक्ष्मीनारायणस्वरूपम् अनयोः अस्ति इति लक्ष्मीनारायणस्वरूपिणौ इति द्वितीयवाक्ये विग्रहः । अत्र तत्पुरुषात् मतुबर्थे इन्प्रत्ययः कृतः ।

इत्थमेव दीर्घकेशः (दीर्घाः केशाः यस्य सः) दीर्घकेशी (दीर्घाः केशाः = दीर्घकेशाः, दीर्घकेशाः अस्य सन्तीति = दीर्घकेशी) इत्यादयः प्रयोगाः व्याख्यातव्याः ।

**इदमत्र ज्ञेयम्** - प्रथमवाक्ये एका एव वृत्तिः (समासः) अस्ति । द्वितीयवाक्ये वृत्तिद्वयम् (समासवृत्तिः + तद्धितवृत्तिः) आश्रितम् । अर्थस्तु न भिद्यते । किन्तु प्रथमवाक्ये प्रयुक्ते समस्तपदे लाघवमस्ति । अतः तादृशः प्रयोगः औचित्यमावहति । अतः एव वैयाकरणानां समयः अस्ति *'न *कर्मधारयात् मत्वर्थीयः बहुव्रीहिश्चेदर्थप्रतिपत्तिकरः'* इति । एकया वृत्त्या इष्टार्थः लब्धश्चेत् तत्र वृत्तिद्वयं न कल्पनीयमिति वाक्यस्याभिप्रायः । किन्तु अस्य समयस्य अनित्यत्वाङ्गीकारात् पूर्वोक्तप्रयोगद्वयमपि समर्थ्यते ।

---

* कर्मधारयपदं वृत्तेः उपलक्षणम् ।

### ५.१३. अर्थवत् समासः

अर्थम् अनुसृत्य विग्रहवाक्यं वक्तव्यं, समासश्च निश्चेतव्यः । 'लोकनाथः' इत्यादौ द्वयोरर्थयोः प्रतीतिः सम्भवति । यथा -

i) लोकस्य नाथः = लोकनाथः (षष्टीतत्पुरुषः) = राजा इत्यर्थः ।

ii) लोकः नाथः यस्य सः = लोकनाथः (बहुव्रीहिः) भिक्षुकः इत्यर्थः ।

एतादृशस्थले प्रकरणं विशेष्यं वा परिशील्य विग्रहो वक्तव्यः । समस्तं पदं वाक्यस्य अवयवभूतं सदेव अभिप्रेतमर्थं बोधयति, न तु स्वतन्त्रतयेति तु न विस्मर्तव्यम् ।

### ५.१४. दीर्घे समस्तपदे विग्रहः

दीर्घे समस्तपदे त्रिचतुराणि, पञ्चषाणि, ततोऽप्यधिकानि अपि पदानि अन्तर्भूतानि भवन्ति । तत्र विग्रहः इत्थं प्रदर्शनीयः । यथा -

*वागर्थप्रतिपत्तये* = वाक् च अर्थः च - वागर्थौ
वागर्थयोः प्रतिपत्तिः - वागर्थप्रतिपत्तिः
तस्यै वागर्थप्रतिपत्तये ।

यथा वा -

*प्रथमकक्ष्यापाठ्यपुस्तकम्* = प्रथमा कक्ष्या - प्रथमकक्ष्या
पाठ्यं च तत् पुस्तकं च - पाठ्यपुस्तकम्
प्रथमकक्ष्यायाः पाठ्यपुस्तकं - प्रथमकक्ष्यापाठ्यपुस्तकम् ।

अतः युगपदेव सर्वैः पदैः समासो न वक्तव्यः, द्वन्द्वसमासं विना । (प्रथमपृष्ठे द्वितीया टिप्पणी अपि द्रष्टव्या ।)

### ५.१५. प्रादिसमासः तत्पुरुषः बहुव्रीहिश्चापि

प्रादिसमासः तत्पुरुषोऽप्यस्ति, बहुव्रीहिरपि ।

यथा - i) प्रादितत्पुरुषः - शोभनः जनः = सुजनः
प्रगतः आचार्यः = प्राचार्यः
मान्यम् अतिक्रान्तः = अतिमान्यः

ii) प्रादिबहुव्रीहिः - शोभनः गन्धः यस्य सः = सुगन्धिः
दुर्गता मेघा यस्य सः = दुर्मेघाः
निर्गता करुणा यस्मात् सः = निष्करुणः ।

अतः अर्थं परिशील्य सुक्ष्मेक्षिकया भेदोऽवगन्तव्यः ।

## ५.१६. नञ्समासोऽपि द्विधा

नञ्समासोऽपि द्विधा - नञ्तत्पुरुषः नञ्बहुव्रीहिश्चेति ।

यथा - i) नञ्तत्पुरुषः - न सन्देहः = असन्देहः
न विवादः = अविवादः

ii) नञ्बहुव्रीहिः - अविद्यमानः पुत्रः यस्य सः - अपुत्रः
अविद्यमानं धनं यस्य सः - अधनः

अतः अत्रापि अर्थमवगत्य विग्रहः वक्तव्यः ।

## ५.१७. समासः सर्वोऽपि विकल्पेन

समासः सर्वोऽपि विकल्पेन प्रवर्तते । (केचन नित्यसमासाः सन्ति । १५ पृष्ठे - २.५.३. पश्यन्तु ।) अतः 'रामः कृष्णश्च गच्छतः' इति, 'रामकृष्णौ गच्छतः' इति वा प्रयोक्तुं शक्यम् । एवमेव 'राज्ञः दूतः तिष्ठति' इति, 'राजदूतस्तिष्ठति' इति वा प्रयोक्तुं शक्यम् ।

## ५.१८. सन्धिसमासयोः भेदः

| सन्धिः | समासः |
|---|---|
| ❖ वर्णनिमित्तकः । | ❖ पदनिमित्तकः । |
| ❖ वर्णानां संहिता* स्यादेव । संहितायां सत्यां सन्धिः नित्यः । | ❖ समासे पदयोः पदानां वा परस्परान्वयः स्यादेव । |
| ❖ सन्धिः पदे पदमध्ये समासे च भवति । | ❖ सुबन्तयोः समासः । |
| ❖ क्वचिदेव पदमपि निमित्तत्वेन आश्रीयते । यथा - हरे + ए = हरये | ❖ समासः विकल्पेन प्रवर्तते । (नित्यसमासस्थलात् ऋते) |

(* संहितैकपदे नित्या, नित्या धातूपसर्गयोः । नित्या समासे, वाक्ये तु सा विवक्षामपेक्षते ।।)

* * *

षष्ठं प्रकरणम्

# ६. समासे प्रक्रियाः

१. रमापतिः २. राजपुरुषः ३. पात्रेसमिताः ४. मेघश्यामः
५. हरिहरौ ६. कृष्णसखः ७. महाराजः ८. अराजा
९. यथाशक्ति १०. शाकप्रति

एतानि दश समस्तपदानि विविच्यन्ते । तथा हि -

**६.१. रमापतिः । (पूर्वपदे उत्तरपदे च विभक्तिलोपः । ततः समस्तपदात् सुबुत्पत्तिः)**

रमायाः पति इति लौकिकविग्रहः । रमा + ङस् + पति + स् इति अलौकिकविग्रहः । द्वयोरपि विभक्त्योः लोपः । ततः रमापति इति समस्तात्पदात् सुप्रत्ययः (रमापति + स्) भवति । रुत्वे विसर्गे च रमापतिः इति निष्पन्नं भवति । अत्र पूर्वपदे उत्तरपदे वा प्रक्रियासम्बन्धी कोऽपि विशेषः नास्ति, विभक्तिलोपमन्तरा । समासे जाते पुनः समस्तात्पदात् सुबुत्पत्तिः भवतीति सदा स्मरणीयम् ।

**६.२. राजपुरुषः । (पूर्वपदे विशेषः)**

राज्ञः पुरुषः इति लौकिकविग्रहः । राजन् + ङस् + पुरुष + स् इति अलौकिकविग्रहः । विभक्त्योः लोपे राजन्पुरुष इति स्थिते पूर्वपदे श्रूयमाणस्य नकारस्य लोपः । ततः सुबुत्पत्तौ राजपुरुष इति निष्पन्नं भवति । अत्र पूर्वपदे नकारलोपः जातः इति पूर्वपदे प्रक्रियासम्बन्धी विशेषोऽस्ति । एवमेव जगदीश इत्यादौ सन्ध्यादिकमपि भवति ।

**६.३. पात्रेसमिताः (पूर्वपदे अलुक्)**

पात्रे समिताः इति लौकिकविग्रहः । पात्र + ङि + समित + जस् इति अलौकिकविग्रहः । अत्र जस्प्रत्ययस्यैव लोपः, न तु ङिप्रत्ययस्य । अतः एषः अलुक्समासः इत्युच्यते । अत्र पूर्वपदे अलुगेव विशेषः ।

## ६.४. मेघश्यामः । (समासे प्राक् प्रयोगः कस्य पदस्य ?)

मेघ इव श्यामः इति लौकिकविग्रहः । मेघ + स् + श्याम + स् इति अलौकिकविग्रहः । विभक्त्योः लोपः । मेघश्यामः इति रूपसिद्धिः । अत्र मेघ इव श्याम इत्यर्थे श्याममेघ इति कुतो न भवति, यथा - व्याघ्र इव पुरुषः = पुरुषव्याघ्रः इति ? एतादृशः सन्देहः समासे बहुत्र भवति । तदा समासविधायकं सूत्रमेव शरणम् । 'मेघश्याम' इत्यत्र समासविधायकं सूत्रं ''उपमानानि सामान्यवचनैः - २.१.५५'' इति । अत्र सूत्रे उपमानानि इति प्रथमान्तं पदम् । तत् प्राक् प्रयोज्यमिति नियमः । एवञ्च समासविधायकशास्त्रे यत् प्रथमान्तम् अस्ति तत्पदबोध्यं पूर्वं प्रयोक्तव्यम् इत्यर्थः । अतः मेघश्याम इत्यत्र उपमानपदबोध्यं पदं 'मेघ' इति, सामान्यवचनपदबोध्यं 'श्याम' इति । सूत्रे 'उपमानानि' इति प्रथमान्तम् । 'सामान्यवचनैः' इति तृतीयान्तम् । अतः मेघपदमेव प्राक् प्रयोज्यम् । एवमेव सर्वत्र समासे व्यवस्था ज्ञेया ।

## ६.५. हरिहरौ (द्वन्द्वे [बहुव्रीहौ च] प्राक्प्रयोगः कस्य ?)

हरिश्च हरश्च इति लौकिकविग्रहः । हरि + स् + हर् + स् इति अलौकिकविग्रहः । विभक्त्योः लोपे पुनः सुबुत्पतौ हरिहरौ इति । अत्र द्वयोरपि प्रथमान्तपदबोध्यत्वं सम्भवति । अत हरहरी इत्यपि प्राप्तम् । तदा घिसंज्ञकं (घि = इकारान्तम् उकारान्तं च प्रातिपदिकम्) प्राक्प्रयोज्यमित्यर्थ-प्रतिपादकं 'द्वन्द्वे घि - २.२.३२' इति सूत्रं प्रवृत्तम् । अतः द्वन्द्वे विशेषसूत्रैः पूर्वपदव्यवस्था क्वचित् ज्ञेया । एवमेव बहुव्रीहौ अपि ।

## ६.६. कृष्णसखः । (उत्तरपदे विशेषः)

कृष्णस्य सखा इति लौकिकः विग्रहः । कृष्ण + ङस् + सखि + स् इति अलौकिकविग्रहः । विभक्त्योः लोपे कृष्णसखि इति भवति । 'राजाहःसखिभ्यष्टच् - ५.४.९१' इति सूत्रेण टच् (अ) प्रत्यये [कृष्णसखि + अ (टच्)] इकारस्य लोपे च कृते सुबुत्पत्तौ

कृष्णसखः इति निष्पद्यते । अत्र उत्तरपदे विकारः जातः । सः समासान्तप्रत्ययनिमित्तः । अतः सर्वेषु समासेषु (तत्पुरुषे, बहुव्रीहौ, द्वन्द्वे, अव्ययीभावे च) क्वचित् उत्तरपदस्य विकारो जायते ।

## ६.७. महाराजः (पुर्वोत्तरपदयोः विशेषः)

महान् राजा इति लौकिकविग्रहः । महत् + स् + राजन् + स् इति अलौकिकविग्रहः । विभक्त्योः लोपे 'महत्राजन्' इति भवति । 'आन्महतः समानाधिकरणजातीययोः - ६.३.४३' इति सूत्रेण महतः तकारस्य आत्वे (मह + आ + राजन्) सवर्णदीर्घे महाराजन् इति भवति । टच्प्रत्यये च कृते सुबुत्पत्तौ महाराज इति निष्पद्यते । अत्र पूर्वेत्तरयोः द्वयोरपि पदयोः प्रक्रियाविशेषः विद्यते ।

## ५.८. अराजा (समासान्तस्य क्वचित् निषेधः)

न राजा इति लौकिकः विग्रहः । न + राजन् + स् इति अलौकिकविग्रहः । विभक्त्योः लोपे 'नलोपो नञः – ६.३.७३' इति सूत्रेण नकारस्य(न्) लोपे पुनः सुबुत्पत्तौ अराजा इति निष्पद्यते । अत्र 'राजाहःसखिभ्यष्टच्' इति सूत्रेण विधीयमानः टच् न प्रवृत्तः । 'नञस्तत्पुरुषात् - ५.४.७१' इति टचः निषेधात् । अतः समासान्तस्यापि क्वचित् निषेधोऽस्ति ।

## ६.९. यथाशक्ति । (पूर्वपदविषये अस्वपदविग्रहः)

शक्तिम् अनतिक्रम्य इति लौकिकविग्रहः । शक्ति + अम् + यथा + इति अलौकिकविग्रहः । विभक्त्योः लोपः । यथा इत्यस्य पूर्वोपस्थितिः । पुनः सुबुत्पत्तौ यथाशक्ति + स् इति जाते 'अव्ययादाप्सुपः - २.४.८२' इति पुनः सुप्रत्यस्य लोपे यथाशक्ति इति निष्पद्यते । अत्र लौकिकविग्रहे अनतिक्रम्य इति श्रूयते । अलौकिकविग्रहे तु यथा इति । अतः समासः यथा इत्यस्य शक्ति इत्यनेनैव, न तु अनतिक्रम्य इति पदेन सह । नित्यसमासे सर्वत्र एषा गतिरेव । एवञ्च अत्र पूर्वपदविषये स्वपदविग्रहो नास्तीति तात्पर्यम् ।

## ६.१०. शाकप्रति । (उत्तरपदविषये अस्वपदविग्रहः)

शाकस्य लेशः इति लौकिकविग्रहः । शाक + ङस् + प्रति + सु इति अलौकिकविग्रहः । विभक्तेः लोपः । पुनः सुबुत्पत्तिः लोपश्च । शाकप्रति इति निष्पद्यते । अत्रापि प्रति इत्यनेनैव सह समासः, न तु लेशपदेन सह । एषः अपि नित्यसमासः । अतः अत्र उत्तरपदविषये स्वपदविग्रहो नास्ति ।

## पुर्वेक्तानाम् एप सङ्ग्रहः

१. पूर्वोत्तरपदयोः प्रक्रियाविशेषः क्वचित् नास्ति । यथा - रमापतिः ।

२. पूर्वपदे नकारलोपादिकं, अलुक्त्वं प्राक्प्रयोज्यत्वं च सम्भवति । यथा - राजपुरुषः, पात्रेसमिताः, हरिहरौ च ।

३. उत्तरपदे समासान्तत्वं, समासान्तनिषेधश्च सम्भवतः । यथा - कृष्णसखः, अराजा ।

४. पूर्वोत्तरयोः द्वयोरपि प्रक्रियाविशेषः भवति । यथा - महाराजः ।

५. लौकिकविग्रहे क्वचित् पूर्वपदं, क्वचित् उत्तरपदम् अन्यत् श्रूयते । यथा - उपकृष्णम्, शाकप्रति ।

* * *

सप्तमं प्रकरणम्

# ७. अभ्यासाः

## अभ्यासः - १

अधोनिर्दिष्टानां विग्रहवाक्यानाम् आधारेण समस्तपदानि लिखन्तु ।

(अ) १. भगवन्तं श्रितः =..........................................
२. पाणिनिना लिखितम् =.....................................
३. भोजनाय अयम् =..........................................
४. तृप्तये इयम् =.............................................
५. क्रीडायां निपुणः =..........................................
६. शास्त्रिणः पुस्तकम् =......................................
७. शर्मणः गृहम् =............................................
८. धनिनाम् आवासः =.......................................
९. वर्मणः शौर्यम् =...........................................
१०. करिणां वृन्दम् =..........................................
११. घनपाठिनः कण्ठश्रीः =....................................
१२. त्रिपाठिनः अध्यापनम् =...................................
१३. महिम्नः वर्णनम् =........................................
१४. अप्सरसां गणः =...........................................
१५. चन्द्रमसः दर्शनम् =.......................................

(आ) १. पुरुषः पुङ्गवः इव =......................................
२. छायाप्रधानः तरुः =.......................................
३. दध्ना अन्नम् =.............................................
४. शास्त्री + महोदयः =.......................................
५. शर्मा + महोदयः =.........................................

६. वर्मा + महोदयः =........................................
७. त्रिपाठी + वर्यः =........................................
८. दूर्वासाः + मुनिः =........................................
९. महत् + दुःखम् =........................................
१०. महत् + पुण्यम्, तेन =........................................

(इ) १. सर्वा + रात्रिः =........................................
२. शुभा + रात्रिः =........................................
३. पुण्या + रात्रिः =........................................
४. दीर्घाः + रात्रयः =........................................
५. त्रयाणां रात्रीणां समाहारः =........................................
६. पश्चिमा + रात्रिः =........................................
७. शिवा + रात्रिः =........................................
८. सङ्ख्याता + रात्रिः =........................................
९. अतिक्रान्तः + रात्रिम् =........................................
१०. मङ्गला + रात्रिः =........................................

(ई) १. अमराणां राजा =........................................
२. कुत्सितः राजा =........................................
३. न राजा =........................................
४. श्रेष्ठः राजा =........................................
५. चन्द्रगुप्तः इति राजा =........................................
६. न + पन्थाः =........................................
७. कृष्णस्य सखा =........................................
८. श्रेष्ठः + सखा =........................................
९. न + सखा =........................................
१०. अतिशयितः राजा =........................................

( उ) १. गृहीतः वृक्षः येन सः =.......................................
२. गृहीतः वृक्षः यया सा =.......................................
३. गृहीता लता येन सः =.......................................
४. गृहीतं तात्पर्यं यया सा =.......................................
५. गृहीता भक्तिः येन सः =.......................................
६. गृहीता धेनुः येन सः =.......................................
७. गृहीता दासी यया सा =.......................................
८. गृहीता श्वश्रूः यया सा =.......................................
९. गृहीतं नाम येन सः =.......................................
१०. गृहीतं पयः येन सः =.......................................

**अभ्यासः - २**

अधः कानिचन विग्रहवाक्यानि दत्तानि सन्ति । तदाधारेण समस्तपदानि लिखन्तु । समासनाम अपि लिखतु ।

१. सालः इति वृक्षः =..................(.....................)
२. भोजः इति राजा =..................(.....................)
३. विजयनगरस्य राजा =..................(.....................)
४. चन्द्रसेनः इति राजा =..................(.....................)
५. दशानाम् अध्यायानां समाहारः =...........(................)
६. अतिक्रान्तः मानवम् =..................(..................)
७. आभरणं करोति इति =..................(.....................)
८. वीणा पाणौ यस्याः सा =..............(.....................)
९. पञ्च वा षड् वा =........................(.................)
१०. न धनम् =......................(.........................)
११. अविद्यमानं धनं यस्य सः =.............(..................)
१२. न आदरः =........................(......................)

१३. श्रेष्ठा भाषा =......................(......................)
१४. जीवन्ती भाषा =......................(......................)
१५. महती वेदना =......................(......................)
१६. महान् आढ्यः =......................(......................)
१७. पिता च भ्राता च =...................(......................)
१८. मध्यं रात्रेः =........................(......................)
१९. श्रुता कथा येन सः =..................(....................)
२०. अन्या कथा =.....................(........................)

**अभ्यासः - ३**

अधोनिर्दिष्टेषु वाक्येषु स्थूलाक्षरैः सूचितानां समस्तपदानाम् विग्रहवाक्यानि लिखन्तु -

१. गोपालः **पीतक्षीरं** वत्सं बध्नाति । (........................)
२. अष्टमकक्ष्यायां **द्वित्राः** छात्राः अनुत्तीर्णाः । (..................)
३. भक्ताः **पीताम्बरं** विष्णुं नमस्कृतवन्तः । (....................)
४. एषः अस्मिन् ग्रामे निवसति । सः **ग्रामान्तरे** निवसति । (......)
५. **उपग्रामम्** अरण्यम् अस्ति । (.................................)
६. सेवकः सर्वदा **यथादेशं** कार्यं करोति । (....................)
७. एषः **प्रश्नातीतः** विषयः । (..................................)
८. **महर्षयः** अरण्येषु निवसन्ति स्म । (...........................)
९. **हरिणनेत्रा** सा सुन्दरी अस्ति । (...............................)
१०. **नागवेणिः** तरुणी मार्गे गच्छति । (...........................)
११. एषः महोदयः मम **पितृसमः** अस्ति । (........................)
१२. वैद्यः **पूर्वाह्ने** चिकित्सालये भवति । (........................)
१३. **नवरात्रे** जनाः सरस्वत्याः पूजां कुर्वन्ति । (....................)
१४. अद्य मार्गे **हस्ताहस्ति** प्रवृत्तम् । (.............................)

१५. रामः वनवाससमये **पञ्चवट्यां** निवसति स्म । (..............)
१६. निर्धनः **दुःखाग्निना** दह्यमानः अस्ति । (......................)
१७. **दशाननं** रावणं रामः संहृतवान् । (..........................)
१८. अस्माकं **प्राचार्यः** अद्य न आगतवान् । (.....................)
१९. अद्य कार्यक्रमे **दशद्वादशाः** जनाः आसन् । (.................)
२०. **सपत्नीकः** सः चलनचित्रं द्रष्टुं गतवान् । (....................)

**अभ्यासः -४**

अधः दत्तानां विग्रहवाक्यानाम् आधारेण समस्तपदानि लिखन्तु ।

| उदा — वृक्षस्य समीपे (उप) = <u>उपवृक्षम्</u> |
|---|

१. विद्यालयस्य सपीपे (उप) =............................... ।
२. पाठशालायाः समीपे (उप) =.............................. ।
३. वञ्चनायाः अभावः (निर्) =............................... ।
४. बुद्धेः योग्यम् (अनु) =................................... ।
५. पारे नद्याः =............................................... ।
६. मध्ये सरस्वत्याः =......................................... ।
७. गुरुम् अभि =............................................... ।
८. आ हिमगिरेः =.............................................. ।
९. आ कन्याकुमार्याः =....................................... ।
१०. आज्ञाम् अनतिक्रम्य (यथा) =............................. ।
११. नीतिम् अनतिक्रम्य (यथा) =.............................. ।
१२. वीथीं वीथीं प्रति =......................................... ।
१३. बन्धूनां समीपे (उप) =................................... ।
१४. मातुः समीपे (उप) =....................................... ।
१५. महिलां महिलां प्रति =.................................... ।

१६. दध्नः अभावः (निर्) =................................. ।
१७. मालत्याः योग्यम् (अनु) =................................।
१८. सूचनाम्  अनतिक्रम्य (यथा) =.......................... ।
१९. मध्ये सभायाः =......................................... ।
२०. शोभायात्राम् अभि =..................................... ।

**अभ्यासः - ५**

संस्कृतसम्मेलनावसरे –

१. प्रसादः धनं सङ्गृहीतवान् ।
२. प्रह्लादः वेदिकाम् अलङ्कृतवान् ।
३. माला पदकानि निर्मितवती ।
४. सुधीरः गणनां  लिखितवान् ।
५. संयोजकः गोष्ठीं निरूढवान् ।
६. निर्देशकः कार्यकर्तॄन्  प्रेरितवान् ।
७. बालिकाः वीथीः अलङ्कृतवत्यः ।
८. वरदा पुस्तकानि विक्रीतवती ।
९. मङ्गला रङ्गवल्लीः लिखितवती ।
१०. विद्या मुरलीं वादितवती ।
११. मोहनः वीणां वादितवान् ।
१२. सुरेशः अतिथीन् अभिनन्दितवान् ।
१३. चन्द्रः (अध्यक्षाय) मालाम् अर्पितवान् ।
१४. उद्घाटकः भारतमातरम् अर्चितवान् ।
१५. वेङ्कटेशः शोभायात्रां व्यवस्थापितवान् ।

पूर्वं निर्दिष्टानां वाक्यानाम् आधारेण कः कीदृशः इति बहुव्रीहिघटितपदेन सूचयन्तु । प्रथमं विग्रहवाक्यं लिखित्वा ततः समस्तं पदं लिखन्तु ।

| उदा – १. सङ्गृहीतं धनं येन सः = सङ्गृहीतधनः (प्रसादः) |
|---|

२. ........................ =........................ (प्रह्लादः)
३. ........................ =........................ (माला)
४. ........................ =........................ (सुधीरः)
५. ........................ =........................ (संयोजकः)
६. ........................ =........................(निर्देशकः)
७. ........................ =........................ (बालिकाः)
८. ........................ =........................ (वरदा)
९. ........................ =........................ (मङ्गला)
१०. ........................ =........................ (विद्या)
११. ........................ =........................ (मोहनः)
१२. ........................ =........................ (सुरेशः)
१३. ........................ =........................ (चन्द्रः)
१४. ........................ =........................ (उद्घाटकः)
१५. ........................ =........................ (वेङ्कटेशः)

**अभ्यासः - ६**

रामकृष्णः कश्चन विद्यार्थी । सः समासादिकं न जानाति । किन्तु तस्य इच्छा यत् मनसि विद्यमानः भावः बहुव्रीहिसमासेन प्रकाशनीयः इति । रामकृष्णस्य अपेक्षाः अधः निर्दिष्टाः सन्ति । भवन्तः समस्तम् एकं पदं सूचयन्तः तस्य विग्रहम् अपि ज्ञापयन्तः तस्य साहाय्यं कुर्वन्तु ।

| उदा – अनुजः पुस्तकं स्वीकृतवान् । अतः अनुजः------- <br> स्वीकृतपुस्तकः (स्वीकृतं पुस्तकं येन सः) |
|---|

१. रामः विद्याम् अधीतवान् । अतः रामः ............................ ।

२. वृक्षे बह्व्यः शाखाः सन्ति । अतः वृक्षः ......................... ।

३. रावणः सीताम् अपहृतवान् । अतः रावणः ...................... ।

४. बालिका मालाः धृतवती अस्ति । अतः बालिका .................. ।

५. रामस्य पत्नी सीता । अतः रामः................................... ।

६. श्रीशः भगिनीम् आहूतवान् । अतः श्रीशः ........................ ।

७. एतस्मिन् ग्रामे अनेके कार्यकर्तारः सन्ति । अतः एष ग्रामः

............................... ।

८. विष्णुः लक्ष्मीं प्राप्तवान् । अतः विष्णुः ......................... ।

९. जनाः धर्मं पालितवन्तः । अतः जनाः ............................ ।

१०. गृहे बह्व्यः वध्वः सन्ति । अतः गृहम् ........................... ।

११. खाद्यस्य गन्धः दुष्टः (दुर्) अस्ति । अतः खाद्यम् .................. ।

१२. तैलस्य गन्धः शोभनः (सु) अस्ति । अतः तैलम् .................. ।

१३. गोपालः गाः पालितवान् । अतः गोपालः ........................ ।

१४. जगदीशः चन्दमामां पठितवान् । अतः जगदीशः .................. ।

१५. अरुणः कथाः कण्ठस्थीकृतवान् । अतः अरुणः.................. ।

**अभ्यासः -७**

अधः विग्रहवाक्यानि दत्तानि सन्ति । एकैकस्य विग्रहवाक्यस्य पुरतः त्रीणि रूपाणि दत्तानि सन्ति । तेषु एकम् एव शुद्धम् । तत् चित्वा रिक्तस्थाने लिखन्तु ।

१. अन्या माला = ............................................
(१. मालान्तरम्, २. मालान्तरा, ३. मालान्तरः)

२. निष्क्रान्तः वाराणस्याः = ..................,............
(१. निर्वाराणसः, २. निर्वाराणसिः, ३. निर्वाराणसम्)

३. त्रयः वा चत्वारः वा = ..................................
(१. त्रिचत्वारि, २. त्रिचतुराः, ३. त्रिचतुरः)

४. मुष्टिभिः मुष्टिभिः प्रहृत्य इदं युद्धं प्रवृत्तम् इति = .........
(१. मुष्टीमुष्टि, २. मुष्टामुष्टि, ३. मुष्टीमुष्टिः)

५. मतिम् अनतिक्रम्य = ......................................
(१. यथामतिः, २. यथामति, ३. यथामतिम्)

६. मध्ये कपिलायाः = ........................................
(१. मध्येकपिलाम्, २. मध्येकपिलः, ३. मध्येकपिलम्)

७. पिता च पितृव्यः च = .....................................
(१. पितृपितृव्यौ, २. पितापितृव्यौ, ३. पितः पितृव्यौ)

८. महत् ज्ञानं यस्य सः = .....................................
(१. महाज्ञानम्, २. महाज्ज्ञानः, ३. महाज्ञानः)

९. दीर्घाः केशाः यस्य सः = ..................................
(१. दीर्घकेशी, २. दीर्घकेशः, ३. दीर्घकेशाः)

१०. पूर्वं रात्रेः = ..................................................
(१. पूर्वरात्रिः, २. पूर्वरात्रम्, ३. पूर्वरात्रः)

**अभ्यासः -८**

अधः कानिचन वाक्ययुगलानि सन्ति । युगलस्थे वाक्यद्वये अपि एकं समस्तपदम् उपयुक्तम् । तादृशानां समस्तपदानाम् अर्थं सम्यक् अवगत्य विग्रहवाक्यं लिखन्तु ।

**उदा** - I (अ) संन्यासिनी सदा **श्वेताम्बरं** धरति । (श्वेतम् अम्बरम्)
(आ) **श्वेताम्बरा** बालिका अप्सराः इव शोभते ।
(श्वेतम् अम्बरं यस्याः सा)

II (अ) **अकार्यं** किमर्थं करोति भवान् ? (...................)
(आ) **अकार्यः** अलसः तूष्णीं तिष्ठति । (...................)

III (अ) **दीर्घहस्तः** व्याधः अरण्यं गतवान् । (....................)
(आ) व्याधः **दीर्घहस्तं** प्रसार्य शुकं गृहीतवान् । (............)

IV (अ) **आकर्णाटकसीमं** कन्नडभाषा अस्ति । (................)
(आ) तमिळुभाषा **आकर्णाटकसीमम्** अस्ति । (..............)

V (अ) **विद्याधनं** सर्वधनप्रधानम् अस्ति । (.....................)
(आ) **विद्याधनः** पण्डितः सर्वत्र पूज्यते । (.....................)

VI (अ) **लोकनाथः** राजा धर्मेण राज्यं पालयति । (..............)
(आ) **लोकनाथः** भिक्षुकः भिक्षायाचनं करोति । (.............)

VII (अ) **शीतलच्छाया** कस्य सन्तोषाय न भवति ? (.............)
(आ) **शीतलच्छायं** वृक्षं सर्वे आश्रयन्ति । (..... .............)

**अभ्यासः - ९**

अधोनिर्दिष्टेषु शब्देषु कश्चन समाससम्बद्धः व्याकरणविशेषः अस्ति । शब्दानां विग्रहवाक्यं लिखित्वा व्याकरणविशेषम् अपि निर्दिशन्तु ।

| *समस्तपदम्* | *विग्रहवाक्यम्* | *समासनाम* | *व्याकरणविशेषः* |
|---|---|---|---|
| उदा - पञ्चरात्रम् | पञ्चानां रात्रीणां समाहारः | द्विगुः | रात्रिशब्दः, अकारान्तः जातः, नपुसंकलिङ्गः च । |
| १. महायोजना | ............ | ........... | ..................... |
| २. अहोरात्रः | ............. | ........... | ..................... |
| ३. यक्षराजः | ............. | ........... | ..................... |
| ४. क्रीतमालाकः | ............. | ........... | ..................... |
| ५. पुष्पस्रजम् (द्वन्द्वः) | ............. | ........... | ..................... |

| | | | |
|---|---|---|---|
| ६. उत्तमगवी | ............ | .......... | .................... |
| ७. चतुष्पात् | ............ | .......... | .................... |
| ८. सप्ताहः | ............ | .......... | .................... |
| ९. अराजा | ............ | .......... | .................... |
| १०. बहुकर्तृकम् | ............ | .......... | .................... |
| ११. उपचन्द्रशालम् | ............ | .......... | .................... |
| १२. अध्यात्मम् | ............ | .......... | .................... |
| १३. दीर्घपथः | ............ | .......... | .................... |
| १४. सुगन्धिः | ............ | .......... | .................... |
| १५. मातादुहितरौ | ............ | .......... | .................... |
| १६. अतिरात्रः | ............ | .......... | .................... |
| १७. यथाकर्मम् | ............ | .......... | .................... |
| १८. लोकसखः | ............ | .......... | .................... |
| १९. रमाजानिः | ............ | .......... | .................... |
| २०. महाबलः | ............ | .......... | .................... |

**अभ्यासः – १०**

अधोनिर्दिष्टानां वाक्यानां समस्तपदेषु दोषाः सन्ति । दोषयुक्तं समस्तपदं स्थूलाक्षरैः निर्दिष्टम् अस्ति । तत्र युक्तं पदं लिखन्तु ।

१. एतादृशः जनः **त्रिलोके** अपि कोऽपि नास्ति ।

२. अद्यतनगोष्ठ्यां **द्वित्रिजनाः** आसन् ।

३. मम विद्यालये **उपविंशतयः** अध्यापकाः सन्ति ।

४. बालकः **पाणिपादान्** प्रक्षाल्य भोजनार्थं गतवान् ।

५. कार्यसिद्ध्यर्थम् अहं **यथाशक्तिः** प्रयत्नं करोमि ।

६. **स्वामीविवेकानन्देन** उक्तम् – 'उत्तिष्ठत, ज़ाग्रत' इति ।

७. **गुप्तराज्ञां** शासनकालः स्वर्णयुगम् इति उच्यते ।

८. कर्णाटकस्थे कोलारप्रदेशे **महत्परिमाणेन** सुवर्णं लभ्यते ।

९. त्रिविक्रमः **मध्यरात्रौ** अपि विना भीतिं गतवान् ।

१०. **नवरात्र्युत्सवे** जनाः सन्तोषेण भवन्ति ।

११. **भवत्सखा** कृष्णः अद्य मिलितः आसीत् ।

१२. एषा **उत्तमगौः** भवता कुत्र क्रीता ?

१३. प्रजानां हितम् अचिन्तयन् एषः **अराजः** एव ।

१४. **ज्ञातधर्मः** अपि दुर्योधनः धर्ममार्गं न अनुसरति स्म ।

१५. कक्ष्यायाम् **उपमङ्गलाम्** उमा उपविशति ।

* * *

# उत्तराणि

**अभ्यासः - १** १. (अ) १. भगवच्छ्रितः । २. पाणिनिलिखितम् । ३. भोजनार्थः । ४. तृप्त्यर्थः । ५. क्रीडानिपुणः । ६. शास्त्रिपुस्तकम् । ७. शर्मगृहम् । ८. धन्यावासः । ९. वर्मशौर्यम् । १०. करिवृन्दम् । ११. घनपाठिकण्ठश्रीः । १२. त्रिपाठ्यध्यापनम् । १३. महिमवर्णनम् । १४. अप्सरोगणः १५. चन्द्रमोदर्शनम् ।

(आ) १. पुरुषपुङ्गवः । २. छायातरुः ३. दध्यन्नम् । ४. शास्त्रिमहोदयः । ५. शर्ममहोदयः । ६. वर्ममहोदयः । ७. त्रिपाठिवर्यः । ८. दूर्वासोमुनिः । ९. महादुःखम् । १०. महापुण्येन ।

(इ) १. सर्वरात्रः २. शुभरात्रिः । ३. पुण्यरात्रः । ४. दीर्घरात्रयः । ५. त्रिरात्रम् । ६. पश्चिमरात्रः । ७. शिवरात्रिः। ८. सङ्ख्यातरात्रः । ९. अतिरात्रः । १०. मङ्गलरात्रिः ।

(ई) १. अमरराजः । २. किंराजा । ३. अराजा । ४. श्रेष्ठराजः । ५. चन्द्रगुप्तराजः । ६. अपन्थाः/अपथम् । ७. कृष्णसखः ८. श्रेष्ठसखः । ९. असखा । १०. अतिराजा ।

(उ) १. गृहीतवृक्षः । २. गृहीतवृक्षा । ३. गृहीतलतः । ४. गृहीततात्पर्यार्था । ५. गृहीतभक्तिः । ६. गृहीतधेनुः । ७. गृहीतदासीका । ८. गृहीतश्वश्रूका । ९. गृहीतनामा । (नकारान्तः) १०. गृहीतपयाः (सकारान्तः)

**अभ्यासः - २** १. सालवृक्षः - सम्भावनापूर्वपदः । २. भोजराजः - सम्भावना-पूर्वपदः । ३. विजयनगरराजः - षष्ठीतत्पुरुषः । ४. चन्द्रसेनराजः - सम्भावनापूर्वपदः । ५. दशाध्यायी - समाहारद्विगुः । ६. अतिमानवः - प्रादिसमासः । ७. आभरणकारः - उपपदसमासः । ८. वीणपाणिः - व्यधिकरणबहुव्रीहिः । ९. पञ्चषाः - सङ्ख्योभयपदः बहुव्रीहिः । १०. अधनम् - नञ्समासः । (तत्पुरुषः) ११. अधनः - नञ्बहुव्रीहिः । १२. अनादरः - नञ्तत्पुरुषः । १३. श्रेष्ठभाषा - विशेषणपूर्वपदः कर्मधारयः । १४. जीवद्भाषा-विशेषणपूर्वपदः कर्मधारयः । १५. महावेदना - विशेषणपूर्वपदः कर्मधारयः । १६. महाढ्यः - विशेषणपूर्वपदः कर्मधारयः । १७. पिताभ्रातरौ - द्वन्द्वसमासः । १८. मध्यरात्रः - प्रथमातत्पुरुषः । १९. श्रुतकथः - तृतीयार्थबहुव्रीहिः । २०. कथान्तरम् - मयूरव्यंसकादिकर्मधारयः ।

**अभ्यासः - ३** १. पीतं क्षीरं येन सः । तम् । २. द्वौ वा त्रयः वा । ३. पीतम् अम्बरं यस्य सः । तम् । ४. अन्यः ग्रामः । तस्मिन् । ५. ग्रामस्य समीपे । ६. आदेशम्

अनतिक्रम्य । ७. प्रश्नम् अतीतः । ८. महान्तः ऋषयः । ९. हरिणस्य नेत्रे इव नेत्रे यस्याः सा । १०. नाग इव वेणी यस्याः सा । ११. पित्रा समः । १२. अह्नः पूर्वम् । तस्मिन् । १३. नवानां रात्रीणां समाहारः । तस्मिन् । १४. हस्तैः हस्तैः प्रहृत्य इदं युद्धं प्रवृत्तम् इति । १५. पञ्चानां वटानां समाहारः । तस्याम् । १६. दुःखम् एव अग्निः । तेन । १७. दश आननानि यस्य सः । तम् । १८. प्रगतः आचार्यः । १९. दश वा द्वादश वा । २०. पत्न्या सह वर्तते इति ।

**अभ्यासः - ४** १. उपविद्यालयम् । २. उपपाठशालम् । ३. निर्वञ्चनम् । ४. अनुबुद्धि । ५. पारेनदि । ६. मध्येसरस्वति । ७. अभिगुरु । ८. आहिमगिरि । ९. आकन्याकुमारि । १०. यथाज्ञम् । ११. यथानीति । १२. प्रतिवीथि । १३. उपबन्धु । १४. उपमातृ । १५. प्रतिमहिलम् । १६. निर्दधि । १७. अनुमालति । १८. यथासूचनम् । १९. मध्येसभम् । २०. अभिशोभायात्रम् ।

**अभ्यासः - ५** १. सङ्गृहीतधनः । २. अलङ्कृतवेदिकः । ३. निर्मितपदका । ४. लिखितगणनः । ५. निरूढगोष्ठीकः । ६. प्रेरितकार्यकर्तृकः । ७. अलङ्कृतवीथीकाः । ८. विक्रीतपुस्तका । ९. लिखितरङ्गवल्लीका । १०. वादितमुरलीका । ११. वादितवीणः । १२. अभिनन्दितातिथिः । १३. अर्पितमालः । १४. अर्चितभारतमातृकः । १५. व्यवस्थापितशोभायात्रः ।

**अभ्यासः - ६** १. अधीतविद्यः । अधीता विद्या येन सः । २. बहुशाखः । बह्व्यः शाखाः यस्मिन् सः । ३. अपहृतसीतः । अपहृता सीता येन सः । ४. धृतमाला । धृता माला यया सा । ५. सीतापत्नीकः । सीता पत्नी यस्य सः । ६. आहूतभगिनीकः । आहूता भगिनी येन सः । ७. अनेककार्यकर्तृकः । अनेके कार्यकर्तारः यस्मिन् तत् । ८. प्राप्तलक्ष्मीकः । प्राप्ता लक्ष्मीः येन सः । ९. पालितधर्माणः । पालितः धर्मः यैः ते । १०. बहुवधूकं गृहम् । बह्व्यः वध्वः यस्मिन् तत् । ११. दुर्गन्धम् । दुष्टः (दुर्) गन्धः यस्य तत् । १२. सुगन्धि । शोभनः (सु) गन्धः यस्य तत् । १३. पालितगुः । पालिताः गावः येन सः । १४. पठितचन्दमामः । पठिता चन्दमामा येन सः । १५. कण्ठस्थीकृतकथः । कण्ठस्थीकृताः कथाः येन सः ।

**अभ्यासः - ७** १. मालान्तरम् । २. निर्वाराणसिः । ३. त्रिचतुराः । ४. मुष्टीमुष्टि । ५. यथामति । ६. मध्येकपिलम् । ७. पितृपितृव्यौ । ८. महाज्ञानः । ९. दीर्घकेशः । १०. पूर्वरात्रः ।

**अभ्यासः - ८** II (अ) न कार्यम् । (आ) अविद्यमानं कार्यं यस्य सः ।
III (अ) दीर्घः हस्तः यस्य सः । (आ) दीर्घः हस्तः ।

IV (अ) आ कर्णाटकसीमायाः । (अभिविध्यर्थे)

(आ) आ कर्णाटकसीमायाः (मर्यादार्थे)

V (अ) विद्या एव धनम् । (आ) विद्या धनं यस्य सः ।

VI (अ) लोकस्य नाथः । (आ) लोकः नाथः यस्य सः ।

VII (अ) शीतला छाया । (आ) शीतला छाया यस्य सः ।

**अभ्यासः - ९** १. महती योजना । कर्मधारयः । महतः आकारः । २. अहश्च रात्रिश्च । द्वन्द्वः । रात्रिशब्दः अकारान्तः पुंल्लिङ्गः च । ३. यक्षाणां राजा । तत्पुरुषः । राजशब्दः अकारान्तः । ४. क्रीता माला येन सः । बहुव्रीहिः । अकारान्तः । ५. पुष्पं च स्रक् च । द्वन्द्वः । अकारान्तः नपुंसकलिङ्गः च । ६. उत्तमा गौः । तत्पुरुषः । स्त्रीलिङ्गे ईकारान्तः । ७. चत्वारः पादाः यस्य सः । बहुव्रीहिः । अकारान्तः पुंल्लिङ्गः च । ८. सप्तानाम् अह्नां समाहारः । द्वन्द्वः । अकारान्तः नपुंसकलिङ्गः च । ९. न राजा । तत्पुरुषः । अकारान्तनिषेधः । १०. बहवः कर्तारः यस्मिन् तत् । बहुव्रीहिः । कप्प्रत्ययः । ११. चन्द्रशालायाः समीपे । अव्ययीभावः । अकारान्तः । १२. आत्मनि इति । अव्ययीभावः । अकारान्तः । १३. दीर्घः पन्थाः । कर्मधारयः । अकारान्तः । १४. शोभनः गन्धः यस्य सः। बहुव्रीहिः। इकारान्तः । १५. माता च दुहिता च । द्वन्द्वः । मातृशब्दस्य आकारन्तत्वम् । १६. रात्रिम् अतिक्रान्तः । प्रादिसमासः (तत्पुरुषः) । रात्रेः अकारान्तत्वम् । १७. कर्माणि अनतिक्रम्य । अव्ययीभावः । अकारान्तनपुंसकलिङ्गः । १८. लोकस्य सखा । तत्पुरुषः । अकारान्तः । १९. रमा जाया यस्य सः । बहुव्रीहिः । जायाशब्दस्य निङ् - आदेशः । २०. महत् बलं यस्य सः । बहुव्रीहिः । महतः आत्वम् ।

**अभ्यासः - १०** १. त्रिलोक्याम् । २. द्वित्रजनाः । ३. उपविंशाः ४. पाणिपादम् । ५. यथाशक्ति । ६. स्वामिविवेकानन्देन । ७. गुप्तराजानाम् । ८. महापरिमाणेन । ९. मध्यरात्रे । १०. नवरात्रोत्सवे । ११. भवत्सखः । १२. उत्तमगवी । १३. अराजा । १४. ज्ञातधर्मा । १५. उपमङ्गलम् ।

******